श्रीगणेशायनमः स्वस्तिश्रीमहाराजाधिराजस्य भोजराजस्यप्रबंधःकथ्यते आदौधाराराज्येसिंधुल संज्ञोराजा चिरंप्रजाःपर्यपालयत् तस्यवृद्धत्वेभो जइतिपुत्रस्समजनि सयदापंचवार्षिकःतदापि तास्यात्मनोजरांज्ञात्वा मुख्यामात्यानाहूय अनुजंमुं जंमहाबलमालोक्य पुत्रंचबालंवीक्ष्यविचारया मास यदाहंराजलक्ष्मीभारधारणसमर्थंसोदरम पहायराज्यंपुत्रायप्रयच्छामितदालोकापवादः अथवाबालंमेपुत्रंमुंजोराज्यलोभाद्विषादिनामारयि ष्यति तदादत्तमपिराज्यंवृथापुत्रहानिर्वंशोच्छेद श्च श्लोकः लोभःप्रतिष्ठापापस्यप्रसूतिर्लोभएव च द्वेषक्रोधादिजनकोलोभःपापस्यकारणं लोभा त्क्रोधःप्रभवतिक्रोधाद्द्रोहःप्रवर्तते द्रोहेणनरकं यातिशास्त्रज्ञोपिविचक्षणः मातरंपितरंपुत्रंभ्रा तरंवासुहृत्तमं लोभाविष्टोनरोहंतिस्वामिनंवास होदरमिति विचार्यराज्यंमुंजायदत्वातदुत्संगेभो जमात्मजंमुमोच ततःक्रमाद्राजनिदिवंगतेसंप्रा प्तराज्यसंपत्तिर्मुंजोमुख्यामात्यंबुद्धिसागरनामानं व्यापारमुद्रयादूरीकृत्यतत्पदेअन्यंविवेश ततो गुरुभ्यःक्षितिपालपुत्रंवाचयति ततःक्रमेणसं भायांज्योतिःशास्त्रपारंगतःसकलविद्याचातुर्यवा न्ब्राह्मणस्समागमत् राज्ञेस्वस्तीत्युक्त्वाउपविष्टः सचाह देवलोकोयंमांसर्वज्ञंवक्ति तत्किमपि पृच्छ श्लोकः कंठस्थायाभवेद्विद्यासाप्रकाश्यास

दात्तुधीः यागुरौपुस्तकेविद्यातयामूढःप्रवार्यते इ
तिराजानंप्राह ततोराजापिविप्रस्याहंभावमुद्दयाच
मुक्तांतद्वार्तांश्रुत्वा अस्माकंजन्मारभ्यैतत्क्षणप
र्यंतंयद्यन्मयाचरितंयद्यत्कृतंतत्सर्वंवदसियद्भि
वान्सर्वज्ञएवेत्युवाच ततोब्राह्मणोपिराज्ञायद्य
त्कृतंतत्सर्वमुवाच गृहव्यापारमपि ततोराजा॰
पिसर्वाण्यप्यभिज्ञानानिज्ञात्वातुतोष पुनश्चवयंच
षट्पदानिगत्वापादयोःपतित्वाइंद्रनीलपुष्परागा
मरकतवैडूर्यखचितसिंहासनेउपवेश्यराजाप्रा
ह श्लोकः मातेवरक्षतिपितेवहितेनियुंक्तेकांतेवचा
भिरमयत्यपनीयखेदं कीर्तिंचदिक्षुविमलांवितनो
तिलक्ष्मींकिंकिन्नसाधयतिकल्पलतेवविद्या
ततोविप्रवरायदशाश्वानाजानेयान्ददौ ततःसभा
यामासीनोबुद्धिसागरःप्राहराजानं देवभोजस्य
जन्मपत्रिकांब्राह्मणंपृच्छेति ततोमुंजःप्राहभोज
स्यजन्मपत्रिकांविधेहीति ततोसौब्राह्मणउवाच
अध्ययनशालायांभोजआनेतव्यइति मुंजोपि
ततःकौतुकादध्ययनशालामलंकुर्वाणंभोजंभटैरा
नाययामास ततःसासात्पितरमिवराजानमानम्य
सविनयंतस्थौ ततस्तद्रूपलावण्यमोहितेराज॰
कुमारमंडलेप्रभूतसौभाग्यंमहीमंडलमागतंम
हेंद्रमिवसाकारंमन्मथमिवमूर्तिमत्सौभाग्यमि
वभोजंनिरूप्यराजानंप्राह दैवज्ञःराजन्भोज
स्यभाग्योदयंवक्तुंविरंचिरपिनालंकोहंसुदरंभ

रिःब्राह्मणःकिं तथापिवदामिस्वमत्यनुसारेणभो
जमितोध्ययनशालायांप्रेषय ततोराजाज्ञयाभोजे
स्वध्ययनशालांगतेविप्रःप्राह श्लोकः पंचाशत्पं
चवर्षाणिसप्तमासदिनत्रयं भोजराजेनभोक्तव्यः
सगौडोदक्षिणापथइति तत्तदाकर्ण्यराजाचातु
र्यादयहसन्निवसुमुखोपिविच्छायवदनोऽभूत्
ततोराजाब्राह्मणंप्रेषयित्वानिशीथेस्वशयनमा
साद्यएकाकीसन्व्यचिंतयत् यदिराज्यलक्ष्मीर्भो
जकुमारंगमिष्यतितदाहंजीवन्नपिमृतः श्लोकः
तानींद्रियाण्यविकलानितदेवनामसाबुद्धिरप्रति
हतावचनंतदेव अर्थोष्मणाविरहितःपुरुषःक्षणे
नसोप्यन्यएवभवतीतिविचित्रमेतत् किंच शरी
रनिरपेक्षस्यदक्षस्यव्यवसायिनः बुद्धिप्रारब्धकार्य
स्यनास्तिकिंचनदुष्करं असूययाहतेनैवपूर्वोपायो
द्यमैरपि कर्तृणांगृह्यतेसंपत्सुहृद्भिर्मंत्रिभिस्तथा
ततोद्यमेकिंदुःसाध्यं श्लोकः अतिदाक्षिण्ययुक्ता
नांशंकितानांपदेपदे परापवादभीरूणांदूरतोयां
तिसंपदः किंच अदानस्यप्रदानस्यकर्तव्यस्यच
कर्मणः क्षिप्रमक्रियमाणस्यकालःपिबतिसंपदः
अवमानंपुरस्कृत्यमानंकृत्वाचपृष्ठतः स्वार्थंसमु
द्धरेत्प्राज्ञःस्वार्थभ्रंशोहिमूर्खता न स्वल्पस्यकृते
भूरिनाशयेन्मतिमान्नरः एतदेवातिपांडित्यंयत्स्व
ल्पाद्भूरिनाशनं जातमात्रंनयःशत्रुंव्याधिंनाप्रश
मंनयेत् अतिपुष्टांगयुक्तोपिसपश्चात्तेनहन्यते

प्रज्ञागुप्तशरीरस्य किंकरिष्यंतिसंहताः हस्तन्यस्ता
तपत्रस्यवारिधाराइवारयः अफलानिदुरंतानिस
मव्ययफलानिच अशक्यानिचवस्तूनिनारभेत
विचक्षणः ततश्चैवंविचिंतयन्नभुक्तएवदिनस्यतृ
तीयेयामेएकएवमंत्रयित्वावंगदेशाधीश्वरस्यमहा
बलस्यवत्सराजस्यआकारणायस्वमंगरक्षकंप्राहि
णोत् सचांगरक्षकोवत्सराजमुपेत्यप्राह राजात्वामा
कारयतीति ततःस्वरथमारुह्यपरिवारेणपरिवृतस्स
मागतोरथादवतार्यराजानमवलोक्यप्रणिपत्योपवि
ष्टः राजाचसौधंनिर्जनंविधायवत्सराजंप्राह श्लोकः
राजातुष्टोपिभृत्यानांमानमात्रंप्रयच्छति तेतुसंमानि
तास्तस्यप्राणैरप्युपकुर्वते ततस्त्वयाभोजोभुवनेश्व
रीविपिनेहंतव्यः प्रथमयामेनिशायाःशिरश्चांतःपुर
मानेतव्यमिति सचोत्थायनृपंनत्वाह देवादेशःप्र
माणंतथापिभवत्त्वालुनात्किमपिवक्तुकामोस्मि त
त्तस्यापराधमितिमेवचःक्षंतव्यं श्लोकः भोजेद्रव्यं
नसेनाचापरिवारोबलान्वितः परंपोतइवास्तेद्यसहंत
व्यःकथंप्रभो पारंपर्यइवासक्तस्त्वत्पादउदरंभरि
तद्वधेकारणंनैवपश्यामिनृपपुंगव ततोराजासर्वं
प्रातःसभायांप्रवृत्तंवृत्तमकथयत् सचश्रुत्वाहसन्ना
ह श्लोकः त्रैलोक्यनाथोरामोस्तिवसिष्ठोब्रह्मपुत्र
कः तेनराज्याभिषेकेतुमुहूर्तःकथितोभवत् तन्मु
हूर्तेनरामोपिवनंनीतोऽवनींविना सीतापहारोप्यभ
वद्वैरिंचिवचनंवृथा जातःकोयंनृपश्रेष्ठकिंचित्स्त

उदरंभरिः यदुक्त्यामन्मथाकारंकुमारंहंतुमिछसि
किंच किन्नुमेस्यादिदंकृत्वाकिन्नुमेस्यादकुर्वतः इ
तिसंचिंत्यमनसाप्राज्ञःकुर्वीतवानवा उचितमनुचि
तंवाकुर्वताकार्यजातंपरिणतिरवधार्यायत्नतःपंडि
तेन अतिरभसकृतानांकर्मणामाविपत्तेर्भवतिहृ
दयदाहीशल्यतुल्योविपाकः किंच येनसहासित
मशितंहसितंकथितंचरहसिविस्रब्धं तंप्रतिकथ
मसतामपिनिवर्तते चित्तमामरणात् किंच अस्मि
न्हतेवृद्धराज्ञस्सिंधुलस्यपरमप्रीतिपात्राणिमहावी
रास्तवैवानुगतेस्थिताः तेत्वन्नगरमुल्लोलकल्लोलाः
पयोधराइवप्लावयिष्यंति चिराद्धुवमूलेपित्वयि
प्रायःपौराःभोजंभुवोभर्तारंभावयंति किंच श्लो
कः सत्यपिचसुकृतकर्मणिदुर्नीतिश्चेत् श्रियंहृ
रत्येव तैलैस्सदीपयुक्तांदीपशिखांविदलयतिहि
वातालिः देवपुत्रवधःकोपिनहिताय इत्युक्तेच व
त्सराजवचनमाकर्ण्यराजाकुपितःप्राह त्वमुवरा
ज्याधिपतिःनतुसेवकः श्लोकः स्वाम्युक्तेयोनय
तते सभृत्योभृत्यपाशकः तज्जीवनमपिव्यर्थंअ
जागलकुचाविवेति ततोवत्सराजःकालोचित
मालोचनीयमितिमत्वातूष्णींबभूव अथलंब
मानेदिवाकरेउत्तुंगसौधोत्संगादवतरंतंकुपित
मिवकृतांतंवत्सराजंवीक्ष्यसमेताअपिविविधेन
मिषेणस्वभवनानिप्रापुर्भीताःसभासदः ततःस्व
सेवकान्स्वागारपरित्राणार्थंप्रेषयित्वारथंभुवने

श्वरीभवनाभिमुखंविधायभोजकुमारोपाध्यायाका रणायप्राहिणोदेकंवत्सराजः सचाहपंडितं तात त्वामाकारयतिवत्सराजइति सोपितदाकर्ण्यवज्र हतइवभूताविष्टइवग्रहग्रस्तइवतेनसेवकेनकरे णधृत्वानीतःपंडितः तंचबुद्धिमान्वत्सराजःसप्रणा ममित्याह पंडिततातउपविश राजकुमारंजयंतं अध्ययनशालाया आनयेति आयांतंजयंतंकुमा रंकिमप्यधीतंपृष्ट्वानैषीत् पुनःप्राहपंडितं विप्र भोजकुमारमानयेति ततोविदितवृत्तांतोभोजःकु पितोज्वलन्निवशोणितेक्षणःसमेत्यप्राह आःपा पराज्ञोमुख्यकुमारंएकाकिनंमांराजभवनात्बहि रानेतुंतवकानामशक्तिरितिवामचरणपादुकामा दायभोजेनताडुदेशेहतोवत्सराजः ततोवत्सरा जःप्राह भोजवयंराजादेशकारिण इति बालंरथे निवेश्यखड्गमपकोशंकृत्वाजगामाशुमहामाया भवनंततोगृहीतेभोजेलोकाःकोलाहलंचक्रुः हुं भावश्चप्रवृत्तः किंकिमितिब्रुवाणाभटाविक्रोशं त आगत्यसहसाभोजंवधायनीतंज्ञात्वाहस्तिशा लासुष्टशालांवाजिशालांरथशालांप्रविश्यसर्वा न्जघ्नुः ततःप्रतोलीषुराजभवनप्राकारवेदिका सुबहिर्द्वारविटंकेषु पुरसमीपेषु भेरिपटहमुरज मड्डुकडिंडिमनिनदाडंबरेणांबरंविडंबितमभूत् केचिद्धिमलासिनाकेचिद्विषेणकेचित्कुंतेनकेचित् पाशेनकेचिदग्निनाकेचित्परशुनाकेचिद्भल्लेनके

चित्तोमरेणकेचित्त्रासेनकेचिद्दंभसाकेचिद्धारायां
ब्राह्मणयोषितोराजपुत्राराजसेवकाराजानःपौरा
श्चप्राणपरित्यागंदधुः ततःसावित्रीसंज्ञाभोजस्य
जननीविश्वजननीवस्थितादासीमुखात् स्वपुत्र
स्थितिमाकर्ण्यकराभ्यांनेत्रेपिधायरुदतीप्राह पु
त्रपितृव्येनकांदशांगमितोसि येमयानियमाउप
वासाश्चत्वत्कृतेकृताःतेद्यमेविफलाजाताःदशा
पिदिशासुखानिशून्यानि पुत्रदेवेनसर्वज्ञेनसर्व
शक्तिनासृष्टाश्रियः पुत्रएनंदासीवर्गसहसावि
च्छिन्नशिरसंपश्येत्युक्त्वाभूमावपतत् ततःप्रदी
प्तेवैश्वानरेसमुद्भूतधूमस्तोमेनैवमलीमसेनभसि
पापत्रासादिवपश्चिमपयोनिधौमग्नेमार्तंडमंड
लेमहामायाभवनमासाद्यप्राहभोजंवत्सराजःकु
मारभृत्यानांदैवतंज्योतिःशास्त्रविशारदेनकेचि
द्ब्राह्मणेनतवराज्यप्राप्तावुदीरितायांराज्ञाभवद्वधो
व्यादिष्टइति भोजःप्राह श्लोकः रामेप्रव्रजनंब
लेर्नियमनंपांडोःसुतानांवनंवृष्णीनांनिधनंनल
स्यनृपतेराज्यात्परिभ्रंशनं कारागारनिषेवणंच
मरणंसंचिंत्यलंकेश्वरेसर्वःकालवशेननश्यतिन
रःकोवापरित्रायते लक्ष्मीकौस्तुभपारिजातसह
जस्सूनुस्सुधांभोनिधेर्देवेनप्रणयप्रसादविधिना
मूर्ध्नाधृतःशंभुना अद्याप्युज्झतिनैवदैवविहितंक्षै
ण्यंक्षपावल्लभःकेनान्येनविलंघ्यतेविधिगतिःपा
षाणरेखासखी विकटोर्व्यामप्यटनंशैलशिलारो

हृणमपांनिधेस्तरणं तिगडंगुहाप्रवेशोविधिपरिपा
कःकथन्नुसंतार्यः अंबोधिस्थलतांस्थलंजलधितां
धूलीलवःशैलतांमेरुर्मृत्कणतांतृणंकुलिशतांवज्रं
तृणप्रायतां वन्हिःशीतलतांहिमंदहनतामायातिय
स्येछयालीलादुर्ललिताद्भुतव्यसनिनेदेवायतस्मैन
मः ततोवटवृक्षस्यपत्रमादायएकेनपुटीकृत्यजं
घांछुरिकयाछित्वातत्रपुटकेरक्तमारोप्यतृणेनक
स्मिन्पत्रेकंचन श्लोकंलिखित्वावत्संप्राह महाभा
गएतत्पत्रंनृपायदातव्यंत्वमपिराजाज्ञांविधेहीति
ततोवत्सराजस्यानुजोभ्राताभोजस्यप्राणपरित्याग
समयेदीप्यमानमुखश्रियमवलोक्यप्राह श्लोकः
एकएवसुहृद्धर्मोनिधनेप्यनुयातियः शरीरेणसमं
नाशंसर्वमन्यच्चगच्छति नततोहिसहायार्थेमाता
भार्याचतिष्ठति नमित्रपुत्रौनज्ञाति धर्मस्तिष्ठति
केवलः बलवानप्यशक्तोसौधनवानपिनिर्धनः
श्रुतवानपिमूर्खश्चयोधर्मविमुखोजनः इहैवनर
कव्याधेश्चिकित्सांनकरोतियः गत्वानिरौषधस्था
नंसरोगीकिंकरिष्यति जरांमृत्युंभयंव्याधिंयोजा
नातिसपंडितः स्वस्थस्तिष्ठेन्निषीदेद्वास्वपेद्वाकेन
चिद्धसेत् तुल्यजातिवयोरूपान्हृतान्पश्यतिमृ
त्युना नहितत्रास्तितेत्रासःवज्रवत्हृदयंतवेति त
तोवैराग्यमापन्नोवत्सराजःभोजंक्षमस्वेत्युक्त्वाप्र
णम्यतंचरथेनिवेश्यनगराद्बहिर्घनेतमसिगृहमा
गसय्यभूमिगृहांतरेनिक्षिप्यभोजंररक्ष स्वयमे

त्कृत्रिमविद्याविद्भिः सुकुंडलस्फुरद्वल्कं निमीलित
नेत्रं भोजकुमारमस्तकं कारयित्वा तच्चादाय कनि
ष्ठो राजभवनं गत्वा राजानं नत्वा प्राह श्रीमता यदादि
ष्टं तत्साधितमिति ततो राजा च पुत्रवधं ज्ञात्वा तमाह
वत्सराज खड्गप्रहारसमये तेन पुत्रेण किमुक्तमिति
वत्सस्तत्पत्रमदात् राजा स्वभार्याकरेण दीपमानी
य तानि पत्राक्षराणि वाचयति श्लोकः मांधाता च
महीपतिः कृतयुगालंकारभूतो गतः सेतुर्येन महो
दधौ विरचितः क्वासौ दशास्यांतकः अन्ये चापि यु
धिष्ठिरप्रभृतयो याता दिवं भूपते नैकेनापि समं ग
ता वसुमती नूनं त्वया यास्यति राजा च तदर्थं ज्ञात्वा
शय्यातो भूमौ पपात ततश्च देवीकरकमलचालि
तचेलांचलानिलेन ससंज्ञो भूत्वा देवि मां मा स्पृश
हा हा पुत्रघातिनमिति विलपन् कुरर इव द्वारपा
लानानाय्य ब्राह्मणानानयतेत्याह ततः स्वाज्ञ
या समागतान् ब्राह्मणान्नत्वा मयासुधीर्हतः त
स्य प्रायश्चित्तं वदध्वमिति वदंतं ते तमूचुः राजन्
सहसा वन्हिमाविशेति ततः समेत्य बुद्धिसागरः
प्राह यथा त्वं राजाधमस्तथैव आमात्याधमो वत्स
राजः तव किल राज्यं दत्वा सिंधुलनृपेण तेन त्वदु
त्संगे भोजः स्थापितः तच्च त्वयापि तृष्णेनान्यत्कृ
तं श्लोकः कतिपयदिवसस्थायिनि मदकारि
णि यौवने दुरात्मानः विदधति तथापराधं जन्मैव य
थास्य वृथा भवति संततस्तृणोत्तारणमुत्तमांगात्सु

ततःसंतुष्टोराजानिजसिंहासनेतस्मिन्निवेशयि-
त्वा छत्रचामराभ्यां भूषयित्वा तस्मै राज्यं ददौ निज
पुत्रेभ्यः प्रत्येकमेकैकग्रामं दत्वा परमप्रेमास्पदं ज
यंतं भोजनिकाशे निवेशयामास ततःपरलोकप
रित्राणे मुंजोपि निजपट्टराज्ञीभिःसह तपोवनभू
मिं गत्वा परं तपस्तेपे ततो भोजभूपालश्च देवब्रा
ह्मणप्रसादाद्राज्यं पालयामास इति भोजरा
जस्य राज्यप्राप्तिप्रबंधः ततो मुंजेन तपोवनं याते
बुद्धिसागरं मुख्यामात्यं विधाय स्वराज्यं बुभुजे भो
जराजभूपतिः एवमतिक्रामति काले कदाचिद्रा
जा क्रीडतोद्यानं गच्छता कोपि धारानगरवासी वि
प्रो लक्षितः स च राजानं वीक्ष्य नेत्रे निमील्य आग
च्छन् राज्ञा पृष्टः द्विज त्वं मां दृष्ट्वा न स्वस्तीति जल्पसि
विशेषेण लोचने निमीलयसि तत्र को हेतुरिति
विप्र आह देव त्वं वैष्णवोसि विप्राणां नोपद्रवं क
रिष्यसि ततस्त्वत्तो न मे भीतिः किंतु कस्मै चित्कि
मपि न प्रयच्छसि तेन तव दाक्षिण्यमपि नास्ति
अतस्ते किमाशीर्वचसा किंच प्रातरेव कृपणमु
खावलोकनात् परतोपि लाभहानिःस्यात् इति
लोकोक्त्या लोचने निमीलिते अपिच श्लोकः
प्रसादो निष्फलो यस्य कोपश्चापि निरर्थकः न तं
राजानमिच्छंति प्रजाः षंढमिव स्त्रियः अप्रगल्भ
स्य या विद्या कृपणस्य च यद्धनं यच्च बाहुबलं भी
रोर्व्यर्थमेतत्त्रयं भुवि देव मत्पिता वृद्धः काशीं प्र

तिगच्छन्मया शिक्षां पृष्टः तात मया किं कर्तव्यमिति
पिताचेत्थमभ्यधायि श्लोकः यदितवहृदयं विद्वन्
सुनयं स्वप्नेपि मास्मसेविष्ठाः सचिवजितं षंढजितं
युवतिजितं चैव राजानं पातकानां समस्तानां द्वे परेतां
तपातके एकं दुस्सचिवो राजा द्वितीयं च तदाश्रयः
अविवेकमतिर्नृपतिर्मंत्रिषु गुणवत्सु वक्रितग्रीवः
यत्र खलाश्च प्रबलास्तत्र कथं सज्जनावसरः राजा
संपत्तिहीनोपि सेव्यः सेव्यगुणाश्रयः भवत्याजीव
नं तस्मात्फलं कालांतरादपि अदातुर्दाक्षिण्यं न हि
भवति देवपुरा कर्णदधीचिशिबिविक्रमप्रमुखाः
क्षितिपतयो यथा परलोकमलंकुर्वाणाः निजदानस
मुद्भूतदिव्यनवगुणैर्निवसंति महीमंडले तथा कि
मपरे राजानः श्लोकः देहे पातिनिकारस्य यशोरक्ष्य
मपातवत् नरः पतितकायोपि यशःकायेन जीवति
पंडिते चैव मूर्खे च बलवत्यपि दुर्बले ईश्वरे च दरि
द्रे च मृत्योस्सर्वत्र तुल्यता निमेषमात्रमपि ते वयो
गच्छन्न तिष्ठति तस्माद्देहेष्वनित्येषु कीर्तिमेकामुपा
र्जयेत् जीवितं तदपि जीवितमध्ये गण्यते सुकृति
भिः किमु पुंसां ज्ञानविक्रमकलाकुललज्जात्याग
भोगरहितं विफलं च तत् राजापि तेन वाक्येन पीयूष
पूरस्नात इव परब्रह्मणि लीन इव लोचनाभ्यां हर्षाश्रू
णि मुमोच प्राह च द्विजं विप्रवर शृणु श्लोकः सुल
भाः पुरुषा लोके सततं प्रियवादिनः अप्रियस्य च प
थ्यस्य वक्ता श्रोता च दुर्लभः मनीषिणः संति न ते हि

वर्णकोट्यर्पणमामनंति प्राणव्ययेवापिकृतोप
काराःखलाःपरेवैरमिवोद्वहंति उपकारश्चापका
रोयस्यव्रजतिविस्मृतिं पाषाणहृदयस्यास्यजीव
तीत्यभिधासुधा यथांकुरःसुसूक्ष्मोपिप्रयत्नेना
भिरक्षितः फलप्रदोभवेत्कालेतथालोकःसुरक्षि
तः हिरण्यधान्यरत्नानिधनानिविविधानिच त
थान्यदपियत्किंचित्प्रजाभ्यःस्युर्महीभृतां राज्ञिध
र्मिणिधर्मिष्ठाःपापेपापपराःसदा राजानमनुव
र्त्ततेयथाराजातथाप्रजाः ततोरात्रावेववह्निप्रवे
शनेनिश्चितेराज्ञिसर्वेसामंताःपौराश्चमिलिताः
पुत्रंहत्वापापभयात् भीतोनृपतिर्वह्निंप्रविशती
तिकिंवदंतीसर्वत्राजनि ततःबुद्धिसागरःद्वार
पालमाहूयनकेनापिभूपालभवनंप्रवेष्टव्यमित्यु
क्त्वानृपमंतःपुरेनिवेश्यसभायामेकाकीसन्नुउ
पविष्टः ततोराजमरणवार्तांश्रुत्वावत्सराजगृह
मागत्यबुद्धिसागरंनत्वाशनैःप्राह तातमयाभो
जराजोरक्षितइति बुद्धिसागरस्यकर्णेतस्यकि
मप्यकथयत् तच्छ्रुत्वावत्सराजश्चनिष्क्रांतः
ततोमुहूर्तेनकोपिकरकलितदंतीइदंतदंडोविर
चितप्रत्ययजटाकलापःकर्पूरकरंबितभसिता
नुद्धूर्तितसकलतनुमूर्तिमान्मन्मथइवस्फटिक
कुंडलमंडितकर्णयुगलःकौशेयकौपीनोमूर्तिमां
श्चंद्रचूडइवसभांकापालिकःसमागतः तंवीक्ष्य
बुद्धिसागरःप्राह योगीद्रकुतआगम्यतेकुत्रते

निवेशश्च कापालिकेत्वयियच्चमत्कारकारीक-
लाविशेषऔषधविशेषोप्यस्ति योगीप्राह श्लोकः
देशेदेशेभवनंभवनेभवनेतथैवभिक्षान्नं सरसि
चनद्यांसलिलंशिवशिवतत्वार्थयोगिनांपुंसां ग्रा
मेग्रामेकुटीरम्यानिर्झरेनिर्झरेजलं भिक्षायांसुल
भंचान्नंविभवैःकिंप्रयोजनं देवअस्माकंनैकोदे
शःसकलभूमंडलंभ्रमामःगुरूपदेशोतिष्ठामः नि
खिलंभुवनतलंकरतलामलकवत्पश्यामः सर्पद
ष्टंविषव्याकुलंरोगग्रस्तंशस्त्रभिन्नशिरस्कंकाल-
शिथिलितंतातत्क्षणादेवविगतसकलव्याधिसं
चयंकुर्मइति राजाधिकुर्व्यांतर्हिनस्वश्रुतसक
लवृत्तांतःसभामागतः कापालिकंदंडवत्प्रणम्य
योगींद्ररुद्रकल्पपरोपकारपरायणमहापापिना
मयाहतस्यपुत्रस्यप्राणदानेनमांरक्षेत्याह अथ
कापालिकोपिराजन्माभैषीःपुत्रस्तेनमरिष्यतिशि
वप्रसादेनगृहमेष्यति परंस्मशानभूमौबुद्धिसाग
रेणसहहोमद्रव्याणिप्रेषयेत्यवोचत् ततोराज्ञाका
पालिकेनयदुक्तंतत्सर्वंतथाकुर्वितिबुद्धिसागरः
प्रेषितः ततोराज्ञोगूढरूपेणभोजोपितत्रनदीपु
लिनेनीतः योगिन्याभोजोजीवितइतिप्रथाचसम
भूत् ततोगजेंद्रारूढोवंदिभिस्तूयमानोभेरीमृदं
गादिघोषैर्जगद्बधिरीकुर्वन्पौरामात्यपरिभृतो
भोजराजोराजभवनमगात् राजाचतमालिंग्य
रोरिति भोजोपिरुदंतंमुंजंनिवार्यअस्तौषीत्

ततः संतुष्टो राजा निजसिंहासने तस्मिन्निवेश्य थि(?) त्वा छत्रचामराभ्यां भूषयित्वा तस्मै राज्यं ददौ निजपुत्रेभ्यः प्रत्येकमेकैकं ग्रामं दत्वा परमप्रेमास्पदं जयंतं भोजनिकाशे निवेशयामास ततः परलोकप्रयाणे मुंजोपि निजपट्टराज्ञीभिः सह तपोवनभूमिं गत्वा परं तपस्तेपे ततो भोजभूपालश्च देवब्राह्मणप्रसादाद्राज्यं पालयामास इति भोजराजस्य राज्यप्राप्ति प्रबंधः ततो मुंजे तपोवनं याते बुद्धिसागरं मुख्यामात्यं विधाय स्वराज्यं बुभुजे भोजराजभूपतिः एवमतिक्रामति काले कदाचिद्राजा क्रीडतोद्यानं गच्छता कोपि धारानगरवासी विप्रो लक्षितः स च राजानं वीक्ष्य नेत्रे निमील्य आगच्छन् राज्ञा पृष्टः द्विजत्वं मां दृष्ट्वा न स्वस्तीति जल्पसि विशेषेण लोचने निमीलयसि तत्र को हेतुरिति विप्र आह देव त्वं वैष्णवोसि विप्राणां नोपद्रवं करिष्यसि ततस्त्वत्तो न मे भीतिः किंतु कस्मैचित्किमपि न प्रयच्छसि तेन तव दाक्षिण्यमपि नास्ति अतस्ते किमाशीर्वचसा किंच प्रातरेव कृपणमुखावलोकनात् परतोपि लाभहानिः स्यात् इति लोकोक्त्या लोचने निमीलिते अपिच श्लोकः प्रसादो निष्फलो यस्य कोपश्चापि निरर्थकः न तं राजानमिच्छंति प्रजाः षंढमिव स्त्रियः अप्रगल्भस्य या विद्या कृपणस्य च यद्धनं यच्च बाहुबलं भीरोर्व्यर्थमेतत्त्रयं भुवि देव मत्पिता वृद्धः काशीं प्र

तिगच्छन्मयाशिक्षांपृष्टः तातमयाकिंकर्तव्यमिति
पिताचेत्थमभ्यधायि श्लोकः यदितवहृदयंविद्वन्
सुनयंस्वप्नेपिमास्मसेविष्ठाः सचिवजितं षंढजितं
युवतिजितंचैवराजानं पातकानांसमस्तानाद्वैपरेना
तपातके एकंदुस्सचिवोराजाद्वितीयंचनदाश्रयः
अविवेकमतिर्नृपतिर्मंत्रिषुगुणवत्सुवक्रितग्रीवः
यत्रखलाश्चप्रबलास्तत्रकथंसज्जनावसरः राजा
संपत्तिहीनोपिसेव्यःसेव्यगुणाश्रयः भवत्याजीव
नंतस्मात्फलंकालांतरादपि अदातुर्दाक्षिण्यंनहि
भवति देवपुराकर्णदधीचिशिबिविक्रमप्रमुखाः
क्षितिपतयोयथापरलोकमलंकुर्वाणाःनिजदानस
मुद्भूतदिव्यनवगुणैर्निवसंतिमहीमंडले तथाकि
मपरेराजानः श्लोकः देहेपातिनिकारक्षायशोरक्ष्य
मपातवत् नरःपतितकायोपियशःकायेनजीवति
पंडितेचैवमूर्खेचबलवत्यपिदुर्बले ईश्वरेचदरि
द्रेचमृत्योस्सर्वत्रतुल्यता निमेषमात्रमपितेवयो
गच्छन्नतिष्ठति तस्माद्देहेप्यनित्येषुकीर्तिमेकामुपा
र्जयेत् जीवितंतदपिजीवितमध्येगण्यतेसुकृति
भिःकिमुपुंसां ज्ञानविक्रमकलाकुललज्जात्याग
भोगरहितंविफलंयत् राजापितेनवाक्येनपीयूष
पूरस्नातइवपरब्रह्मणिलीनइवलोचनाभ्यांहर्षाश्रू
णिमुमोच प्राहचद्विजंविप्रवरश्शृणु श्लोकः सुल
भाःपुरुषालोकेसततंप्रियवादिनः अप्रियस्यचप
थ्यस्यवक्ताश्रोताचदुर्लभः मनीषिणःसंतिनतेहि

तैषिणोहितैषिणःसंतिनतेमनीषिणः सुहृच्चविद्वानपि दुर्लभोनृणांयथौषधंस्वादुहितंचदुर्लभं इतिविप्राय लक्षंदत्वा किंतेनामेत्याह विप्रःस्वनामभूमौलिखति गोविंदइति राजावाचयित्वा विप्रप्रसहंराजभवनमागतव्यंनतेकश्चिन्निषेधः विद्वांसःकवयश्चकौतुकान्सभामानेतव्याः कोपिविद्वान्नदुःखभागस्तुएनमधिकारंपरिपालयेत्याह एवंगच्छत्सुकतिपयदिवसेषुराजाविद्वत्प्रियःदानविद्येश्वरइतिप्रथामगात् ततोराजानंदिदृक्षवःकवयोनानादिग्भ्यःसमागताः एवंवित्तादिव्ययंकुर्वाणंराजानंप्रतिकदाचिन्मुख्यामात्येनेत्थमभ्यधायि देवराजानःकोशबलाएवविजयिनोनान्ये श्लोकः सजयीवरमातंगायस्यकस्यास्तिमेदिनी कोशोयस्यसुहृर्धर्षोदुर्गंयस्यसुदुर्जयः देवलोकंपश्य श्लोकः प्रायोधनवतामेवधनेतृष्णागरीयसी पश्यकोटिद्वयासक्तंलक्षायप्रवणंधनुः इति राजाचतमाह दानोपभोगवंध्यायासुहृद्भिर्यानभुज्यते पुंसांसमाहितालक्ष्मीरलक्ष्मीःक्रमशोभवेत् इत्युक्त्वाराजातंमंत्रिणंनिजपदाद्दूरीकृत्यतत्पदेन्यंदिदेश आहचतं श्लोकः लक्षंमहाकवेर्देयंतदर्धंविबुधस्यच देयग्रामेकमर्धस्यतस्याप्यर्धंतदर्थिनः यश्चमेअमात्यादिषुवितरणनिषेधमनाःसहंतव्यः उक्तंच श्लोकः यद्ददातियदश्नातितदेवधनिनांधनं अन्येमृतस्यक्रीडंतिदारैरपिधनैरपि प्रियःप्रजानांदातैवनपुनर्द्रविणेश्वरः अ

गच्छन्नूकांस्यतेलोकैर्वारिदोनतुवारिधिः संग्रहैकप
रःप्रायःसमुद्रोपिरसातले दातारंजलदं पश्यगर्जंतं
भुवनोपरि एवंवितरणशालिनं भोजराजंश्रुत्वाक
श्चित्कलिंगदेशात्कविरुपेत्यमासमात्रंतस्थौसचक्षो
णींद्रदर्शनंभवतिआहारार्थंपाथेयमपिनास्ति
ततःकदाचिद्राजामृगयाभिलाषीबहिर्निर्गतःसक
विर्दृष्ट्वाराजानमाह श्लोकः दृष्टेश्रीभोजराजेंद्रे
गलंतीत्रीणितत्क्षणात् शत्रोःशस्त्रंकवेःकष्टंनी
वीबंधोमृगीदृशां राजालक्षंददौ ततस्तस्मिन्मृग
यारसिकेराजनिकश्चनपुलिंदपुत्रोगायति तेन
गीतमाधुर्येणतुष्टोराजातस्मैपुलिंदपुत्रायपंचल
क्षंददौ तदाकविःतद्दानमसुन्नतेकिरातयोनंच
दृष्ट्वानरेंद्रपाणिकमलस्थपंकजमिषेणराजानंव
दति एतेगुणाःपंकजसंतोपि नते प्रकाशमायां
ति यल्लक्ष्मीवसतेस्तवमधुपैरुपभुज्यतेकोशः
भोजस्तमभिप्रायंज्ञात्वापुनर्लक्षमेकंददौ ततो
राजाब्राह्मणमाह श्लोकः प्रभुभिःपूज्यतेविप्र
कलैवनकुलीनता कलावान्मान्यतेमूर्ध्निसत्सु
देवेषुशंभुना एवंवदतिभोजेकुतोपिपंचषाःक
वयःसमागताः तान्दृष्ट्वाराजाविलक्षणइवासीत्
अद्यैवमयाएतावद्दित्तंदत्तमिति ततःकविस्तम
भिप्रायंज्ञात्वानृपंपद्ममिषेणपुनःप्राह श्लोकः
किंकुप्यसिकस्मैवानवसौरभसारायहिनिजम
धुने यस्यकृतेशतपत्रतेद्यमतिपत्रंमृग्यतेभ्रम

रैः ततःप्रभुंप्रसन्नवदनमवलोक्यप्रकाशेनप्राह
श्लोकः नदातुंनोपभोक्तुंचशक्नोतिकृपणःश्रियं
किंतुस्पृशतिहस्तेननपुंसकइवस्त्रियं याचितोयः
प्रहृष्येतदत्वाचप्रीतिमान्भवेत् तंदृष्ट्वाप्यथवा
श्रुत्वानरःस्वर्गमवाप्नुयात् ततस्तुष्टोराजापुनर
पिकलिंगदेशवासिकवयेलक्षंददौ ततःपूर्वक
विःपुरस्थितान्षट्कवीन्द्रान्दृष्ट्वाह हेकवयोत्रम
हासरस्सेतुभूमौवासीराजायदाभवनंगमिष्यति
तदाकिमपिब्रूतेतियेचसर्वेमहाकवयोपिसर्वेरा
ज्ञःप्रथमचेष्टितंज्ञात्वावर्ततेतेष्वेकःसरोमिषेण
नृपंप्राह श्लोकः आगतानामपूर्णानांपूर्णानाम
प्यगच्छतां यदध्वनिनसंघट्टोघटानांतत्सरोवरमि
ति तस्यराजालक्षंददौ ततोगोविंदपंडितस्तान्
कवीन्द्रान्दृष्ट्वाचुकोप तस्यकोपाभिप्रायंज्ञात्वाद्वि
तीयःकविराह श्लोकः कस्यतृषंनक्षिपयसिपि
बतिनकस्तवपयःप्रविश्यांतः यदिसन्मार्गसरोव
रनक्रोनक्रोडमधिवसति राजातस्मैलक्षद्व
यंददौ तंचगोविंदपंडितव्यापारयदादूरीकृत्य
त्वयापिसभायामागंतव्यंपरंतुकेनापिद्वेष्यंनक
र्तव्यं इत्युक्त्वाततस्तेभ्यःप्रत्येकंलक्षंदत्वास्वनग
रमागतः तेचयथायथंगताः ततःकदाचिद्राजा
मुख्यामात्यंप्राह विप्रोपियोभवेन्मूर्खःसपुराद्ब
हिरस्तुमे कुंभकारोपियोविद्वान्सतिष्ठतुपुरेम
मेति अतःकोपिनमूर्खोभूद्द्वारानगरेततःक्रमे

णपंचशतानि विदुषांवररुचिबाणमयूररेफणहरिशं
करकलिंगकर्पूरविनायकमदनविद्याविनोदको
किलतारेंद्रमुखाःसर्वशास्त्रविचक्षणाःसर्वेसर्वज्ञाः
श्रीभोजराजसभामलंचक्रुः एवंस्थितेकदाचिद्वि
द्वद्वृंदवदितेसिंहासनासीनेकविशिरोमणौकविस्वप्रि
येविप्रप्रियबांधवेभोजेश्वरे द्वारपालएत्यप्रणम्य
व्यजिज्ञपत् देवकोपिविद्वान्द्वारितिष्ठतीति अथ
राजाप्रवेशयतमिति आज्ञप्तेसोपिदक्षिणेनपाणि
नासमुन्नतेनविराजमानोविप्रःप्राह श्लोकः राज
न्नभ्युदयोस्तुशंकरकवेकिंपत्रिकायामिदंपद्यंक
स्यतवैवभोजनृपतेतत्पठ्यतांपठ्यते एतासामर
विंदसुंदरदृशांद्राक्चामरांदोलनादुद्वेल्लद्भुजवल्लिकं
कणझणत्कारःक्षणंवार्यतां यथायथाभोजयशो
विवर्धतेसितांत्रिलोकीमिवकर्तुमुद्यतं तथातथा
मेहृदयंविदूयतेप्रियालकालीधवलत्वशंकया
ततोराजाशंकरकवयेद्वादशलक्षंददौ सर्वेविद्वां
सश्चविच्छायवदनाबभूवुः परंकोपिराजभया
न्नावदत् राजाचकार्यवशातगृहंगतः ततोविभू
पालांसभांदृष्ट्वाविबुधगणस्तंनिनिंद अहोनृपतेः
रज्ञताकिमस्यसेवयावेदशास्त्रविचक्षणेभ्यःस्वा
श्रयकविभ्यःलक्षमदात् किमनेनवितुष्टेनापि
असौचकेवलंग्राम्यःकविःशंकरःकिमस्यप्राग
ल्भ्यंइत्येवंकोलाहलरवेजातेकश्चिदभ्यगात्
कनकमणिकुंडलशालीदिव्यांशुकप्रावरणोनृ

पकुमार इव मृगमदपंककलंकितगात्रो नवकुसुमसमभ्यर्चितशिराश्चंदनांगरागेण विलोभयन् विलास इव मूर्तिमान् कवितेवत्वनुमाश्रितःशृंगाररसस्य स्यंद इव सस्यंदोमहेंद्र इव महीवलयं प्रासो विद्वान् तं दृष्ट्वा सा विद्वत्परिषत् भयकौतुकयोः पात्रमासीत् सच सर्वान्प्रणिपत्य प्राह कुत्र भोजनृप इति तेतमूचुरिदानीमेव सो ध्यांतरगत इति तु तो सौ प्रत्येकं तेभ्यस्तांबूलं दत्त्वा गजेंद्र कुलगतः मृगेंद्र इवासीत् ततः स महापुरुषः शंकरकविप्रदानेन कुपितान् ताल्लुब्ध्वा प्राह भवद्भिः शंकरकवये द्वादशलक्षाणि प्रदत्तानीति न मंतव्यं अभिप्रायस्तु राज्ञो नैव बुद्धः यतः शंकरपूजने प्रारब्धे शंकरकविस्त्वे केनैव लक्षेण पूजितः किंतु तं निष्ठान् तं नाम्ना विभ्राजितानेकादशरुद्रान् शंकरानपरान् मूर्तीन्प्रत्यक्षान् ज्ञात्वा तेषां प्रत्येकमेकैकं लक्षं तस्मै शंकरकवय एव शंकरमूर्तये प्रदत्तमिति राज्ञोभिप्राय इति सर्वेपि चमत्कृतास्तेन ततः कोपि राजपुरुषः तद्विद्वत्स्वरूपं द्राग्राज्ञे निवेदयामास राजा च स्वमभिप्रायं साक्षाद्विदितवंतं तं महेशमिव महापुरुषं मन्यमानः सभामभ्यगात् सच स्वस्तीत्याह राजानं राजा च तमालिंग्य प्रणम्य निजकरकमलेन तत्करकमलमवलंब्य सौधांतरंगत्वा प्राङ्गुणगवाक्ष उपविष्टः प्राह विप्र भवन्नाम्नाकान्यक्षराणि सौभाग्यावलंबितानि कस्य वा देशस्य भवद्विरहः सुजनान्

बाधतइति ततः कविर्लिखति राज्ञो हस्ते कालिदा
सइति राजा वाचयित्वा पादयोः पतति ततस्तत्रा
सीनयोः कालिदासभोजराजयोरासीत्संध्या राजा
सखे संध्यां वर्णयेत्यवादीत् श्लोकः व्यसनिनइव
विद्याक्षीयते पंकजश्रीः गुणिनइव विदेशैदैन्यमा
यांति भृंगाः कुनृपतिरिव लोकं पीडयत्यंधकारो ध
नमिव कृपणस्य व्यर्थतामेति चक्षुः पुनश्च राजानं
स्तौति कविः श्लोकः उपचारः कर्तव्यो यावदनुत्प
न्नसौहृदाः पुरुषाः उत्पन्नसौहृदानामुपचारः कै
तवं भवति दत्वा तेन कविभ्यः पृथ्वी सकलापि
कनकसंपूर्णा दिव्यां सुकाव्यरचनां क्रमं कवीनां
चयो विजानाति सुकवेः शब्दसौभाग्यं सत्कवि
र्वेत्तिनापरः वंध्या नहि विजानाति परां दौहृदसं
पदमिति ततः क्रमेण भोजकालिदासयोः प्रीति
रजायत ततः कालिदासं वेश्यालंपटं ज्ञात्वा त
स्मिन्सर्वेद्वेषं चक्रुः नकोपितं स्पृशति अथकदा
चित्सभामध्ये कालिदासमालोक्य भोजेन मनसा
चिंतितं कथमस्य प्राज्ञस्यापि स्मरपीडाप्रमादइति
सोभितदभिप्रायं ज्ञात्वा प्राह चेतोभुवश्चापल
ताप्रसंगे का वा कथा मानुषलोकभाजां यद्दाह
शीलस्य सुराविजेतुः तथाविधं पौरुषमर्थमासी
त् ततस्तुष्टो भोजराजः प्रत्यक्षरलक्षं ददौ ततः
कालिदासः भोजं स्तौति श्लोकः महाराजश्रीम
न्जगति यशसा ते धवलिते पयःपारावारं परंपु

रूपोयं मृगयते कपर्दीकैलासं करिवरमभोमं कुलिशभृत्कलानाथं राहुः कमलभवनोहंसमधुना नीरक्षीरेगृहीत्वा निखिलखगततिर्यातिनालीकजन्मा तक्रंधृत्वातुसर्वानटतिजलनिधीञ्चक्रपाणिर्मुकुंदः सर्वानुत्तुंगशैलान्दहतिपशुपतिः फालनेत्रेणपश्यन् व्याप्तात्वत्कीर्तिकांतात्रिजगतिनृपते भोजराजक्षितींद्र विद्वद्राजशिखामणे तुलयितुंधातात्वदीयंयशः कैलासंचनिरीक्ष्य तत्रलघुतांनिक्षिप्तवान्पूर्तये उक्षाणंतदुपर्युमासहचरंतन्मूर्ध्निगंगाजलंतस्याग्रेफणिपुंगवंतदुपरिस्फारंसुधादीधितिं स्वर्गाङ्गोपालकुत्रव्रजसिसुरमुनेभूतलेकामधेनोर्वत्सस्यानेतुकामस्तृणचयममधुनामुग्धदुग्धंनतस्याःश्रुत्वाश्रीभोजराजप्रचुरवितरणंव्रीडशुष्कस्तनीसाव्यर्थोहिस्यात्प्रयासस्तदपितदरिभिश्चर्वितंसर्वमुर्व्यां तुष्टोराजाप्रत्यक्षरलक्षंददौ ततःकदाचित्श्रुतिस्मृतिसारंगताःकेचिद्राजानंकवित्वप्रियंज्ञात्वाक्वचिन्नगराद्बहिःभुवनेश्वरीप्रसादेनकवित्वंकरिष्यामइत्युपविष्टाःतेष्वनेनपंडितमन्येनएकश्चरणोपाठि भोजनंदेहिराजेंद्रेति अन्येनापाठिघृतसूपसमन्वितमिति उत्तरार्धंनस्फुरति ततोदेवताभवनंकालिदासःप्रणामार्थमगात् तंवीक्ष्यद्विजाऊचुः अस्माकंसमग्रवेदविदामपिभोजःकिमपिनार्पयति भवादृशांहिसर्थंछं

दत्ते ततोऽस्माभिः कवित्वविधानधियाऽऽगतं चि
रं विचार्य पूर्वार्धमभ्यधायि उत्तरार्धं कृत्वा देहि त
तोऽस्मभ्यं किमपि प्रयच्छतीत्युक्त्वा तत्पुरस्तादर्थ
मभाणि स च तच्छ्रुत्वा प्राह पंचशरश्चंद्रचंद्रि
काधवलं दधीत्याह ते च राजभवनं गत्वा दौवा
रिकानूचुः वयं कवनं कृत्वा समागताः राजानं द
र्शयतेति ते च कौतुकात् हसंतो गत्वा राजानं प्र
णम्य प्राहुः श्लोकः राजमाषनिभैर्दंतैः कटिवि
न्यस्तपाणयः द्वारि तिष्ठंति राजेंद्र छांदसाः श्लोक
शत्रव इति राज्ञा प्रवेशितास्ते हटराजसंसदि मि
लिताः सहैव कवित्वं पठंति स्म राजा तच्छ्रुत्वा उ
त्तरार्धं कालिदासेन कृतमिति ज्ञात्वा विप्रानाह
येन पूर्वार्धं कारितं तन्मुखात्कवित्वं कदाचिदपि
न करणीयं उत्तरार्धस्य किंचिद्दीयते न पूर्वार्ध
स्येत्युक्त्वा प्रत्यक्षरलक्षं ददौ तेषु च दक्षिणा
मादाय गतेषु कालिदासं वीक्ष्य राजा प्राह कवे
उत्तरार्धं त्वया पठितमिति कविराह श्लोकः
अधरस्य मधुरिमाणं कुचकाठिन्यं दृशोश्च तै
क्ष्ण्यं च कवितायां परिपाकं ह्यनुभवरसिको वि
जानाति राजा च सुकवे सत्यं वदसि श्लोकः अ
पूर्वा भाति भारत्याः काव्यामृतफले रसः चर्वणे
सर्वसामान्ये स्वादुवित्केवलं कविः संचिंत्य सं
चिंत्य जगत्समस्तं त्रयः पदार्था हृदयं प्रविष्टाः
इक्षोर्विकारा मतयः कवीनां मुग्धांगनापांगतरं

गितानि ततः कदाचिद्द्वारपालकः प्रणम्य भोजं प्राह राजन्द्रविडदेशात्कोपि लक्ष्मीधरनामा कविर्द्वारि मध्यास्त इति राजा प्रवेशयेत्याह प्रविष्टमिव सूर्यमिव विभ्राजमानं चिरादप्यविदितवृत्तांतं प्रेक्ष्य राजा विचारयामास आह श्लोकः

आकारमात्रविज्ञानसंपादितमनोरथाः धन्यास्तेन्येन शृण्वंति दीनाः काप्यर्थिनां गिराः सचागत्य तत्र राजानं स्वस्तीत्युक्त्वा तदाज्ञयोपविष्टः प्राह देव इयं ते पंडितमंडिता सभा त्वं च साक्षाद्विष्णुरसि ततः किं नाम पांडित्यं मम तथापि किंचिद्ब्रवीमि

श्लोकः भोजप्रतापं तु विधाय धात्राशेषैर्निरस्तैः परमाणुभिः किं हरेः करे भूत्पविरंबरे च भानोः पयोधेरुदरे कृशानुः इति ततस्तेन परिष च्चमत्कृता राजा च तस्य प्रत्यक्षरलक्षं ददौ पुनः कविराह देव मया सकुटुंबेनात्र निवासाशया समागतं

श्लोकः क्षमी दाता गुणग्राही स्वामी पुण्येन लभ्यते अनुकूलः शुचिर्दक्षः कविर्विद्वान्सुदुर्लभः इति ततो राजा मुख्यामात्यं प्राहास्मै गृहं दीयतामिति ततो निखिलमपि नगरं विलोक्य कमपि मूर्खममात्यो नापश्यत् यं निरस्य विदुषे गृहं दीयते तत्र सर्वत्र भ्रमन् कस्य चित्कुविंदस्य गृहं वीक्ष्य कुविंदं प्राह कुविंद गृहान्निःसर तव गृहं विद्वानेष्यतीति ततः कुविंदो राजभवनमासाद्य राजानं प्रणम्य प्राह देव भवदमात्यो मां मूर्खं कृत्वा गृहान्निःसारय

तीति त्वंतुपश्यमूर्खः पंडितोवेति काव्यंकरोमिनहि
चारुतरंकरोमियत्नात्करोमियदिचारुतरंकरोषि
भूपालमौलिमणिमंडितपादपीठहेसाहसांककव
यामिवयामियामि ततोराजात्वंकारवादेनवदंतं
कुविंदंप्राह श्लोकः ललितातेपदपंक्तिःकविता
माधुर्यंचशोभनंपरंतुकवित्वंविचार्यवक्तव्यमि
ति ततःकुपितःकुविंदःप्राह देवअत्रांतरंभाति
किंतुनवदामिराजधर्मःपृथक् विद्वद्धर्मादिति
राजाप्राह अस्तिचेदुत्तरंब्रूहीति देवकालिदासा
हतेन्यंकविंनमन्येकोस्तितेसभायांकालिदासा
हतेकवितातत्त्वविद्विद्वान् श्लोकः यत्सारस्वत
वैभवंगुरुकृपापीयूषपाकोद्भवं तल्लभ्यंकविनैवनै
वहठतःपाठप्रतिष्ठाजुषां कासारेदिवसंवसन्नपिप
यःपूरंपरंपंकिलंकुर्वाणःकमलाकरस्यलभते
किंसौरभंसैरिभः अयंमेवाग्गुंफो विशदपदवैद
ग्ध्यमधुरःस्फुरद्बंधोवंध्यःपरहृदिकृतार्थःकविहृ
दि कटाक्षोवामाक्ष्यादरदलितनेत्रांतगलितः कु
मारेनिःसारःसतुकिमपियूनःसुखयतीति विद्व
ज्जनवंदितासीताप्राह श्लोकः विपुलहृदयाभि
योग्येखिद्यतिकाव्येजडोनमौर्ख्येस्वे निंदतिकंचु
कमेवप्रायःशुष्कस्तनीनारी ततःकुविंदःप्राह
श्लोकः बाल्येसुतानांसुरतेंगनानां स्तुतौकवी
नांसमरेभटानां त्वंकारयुक्ताहिगिरःप्रशस्ताः
कस्तेप्रभोमोहभरःस्मरत्वं ततोराजासाधुभो

कुविंदेत्युक्त्वा तस्याक्षरलक्षं ददौ मा भैषीरिति पुनः कुविंदं प्राह एवं क्रमेणातिक्रांते कियत्यपि काले बाणः पंडितवरः परं राज्ञा मान्यमानोपि प्राक्तनकर्मतो दारिद्र्यमनुभवति एवं स्थिते नृपतिः कदाचिद्रात्रावेकाकी प्रच्छन्नवेशः स्वपुरे चरन् बाणगृहमेत्यातिष्ठत् तदा निशीथे बाणो दारिद्र्याद्व्याकुलतया कांतां वक्ति देवि राजा कियद्वारं मम मनोरथमपूरयत् अद्यापि पुनः प्रार्थितो ददात्येव परंतु निरंतरप्रार्थनारसे मूर्खस्यापि जिह्वा जडी भवतीत्युक्त्वा मुहूर्तार्धं मौनेन स्थितः पुनः पठति श्लोकः हरहरपुरहर परुषं कहालाहलफल्गु याचना वचसोः एकैव तव वरसज्ञा तदुभयरसतारतम्यज्ञा देवि दारिद्र्यस्यापरा मूर्तिर्याञ्चा न द्रविणान्यति अपि कौपिनवान् शंभुस्तथापि परमेश्वरः सेवासुखानां व्यसनं धनानां याञ्चा गुरूणां कुनृपः प्रजानां प्रणष्टशीलस्य सुतः कुलानां मूलावघातः कठिनः कुठारः तत्सत्यपि दारिद्र्ये राज्ञो वक्तुं मया स्वयमशक्यं गच्छन् क्षणमपि जलदो वल्लभतामेति सर्वलोकस्य नित्यप्रसारितकरः करोति सूर्योपि संतापं किंच देवि वैश्वदेवावसरे प्राप्ताः क्षुधार्ताः पश्यन्तीति तदेव मे हृदयं धुनोति दारिद्र्यानलसंतापः शांतः संतोषवारिणा याचकाशाविघातांतर्दाहः केनोपशाम्यते राजा चैतत्सर्वं श्रुत्वा नेदानीं किमपि दातुं योग्यः प्रातरेव बाणं पूर्णमनोरथं करिष्यामीति

निष्क्रांतो राजा श्लोकः कृतो यैर्न च वाग्मी च व्यु
त्पन्नी तं नयैः पदं यैरात्मसदृशो नार्थी किं तैः काव्यै
र्बलैर्धनैः एवं पुरे परिभ्रममाणे राजनि वर्त्मनि
चोरद्वयं गच्छति तयोरेकः प्राह शकुंतकः सखे
स्फारांधकार विततेपि जगत्यं जनवशात्सर्वं प
रमाणुप्रायमपि वसु सर्वत्र पश्यामि परं तु संभार
गृहानीतकनकजातमपि न मे सुखायेति द्वितीयो
मरालनामा चोर आह आहृतं संभारगृहात्
कनकजातमपि न हितमिति कस्माद्धेतोरुच्यत
इति ततः शकुंतकः प्राह सर्वतो नगररक्षकाः प
रिभ्रमंति सर्वोपि जागरिष्यत्येषां भेरीपटहादीनां
निनादेन तस्मादाहृतं विभज्य स्वस्वभागागतं ध
नमादाय शीघ्रमेव गंतव्यमिति मरालः प्राह स
खे त्वमनेन कोटिद्वयपरिमितमणिकनकजाते
न किं करिष्यसीति शकुंतः एतद्धनं कस्मैचि
द्द्विजन्मने दास्यामि यथायं वेदवेदांगपारगो अ
न्यन्न प्रार्थयति मरालः सखे चारु श्लोकः ददतो
युध्यमानस्य पठतः पुलको यथ चेत् आत्मनश्च
परेषां च तद्दानं पौरुषं स्मृतं मरालः अनेन दानेन त
व कथं पुण्यफलं भविष्यतीति अस्माकं पितृ
पैतामहोयं धर्मः यच्चौर्येण वित्तमानीयते मरा
लः शिरश्छेदमंगीकृत्यार्जितं द्रव्यं निखिलमपि
कथं दीयते शकुंतः श्लोकः मूर्खो न हि ददात्य
र्थं नरो दारिद्र्यशंकया प्राज्ञस्तु वितरत्यर्थं नरो

रिद्यशंकया किंचिदिदमयंपात्रंकिंचित्पात्रंतपो
मयं पात्राणामुत्तमंपात्रंशूद्रान्नंयस्यनोदरे श्लकुं
तः अनेनवित्तेनकिंकरिष्यतिभवान् मरालः
सखेकाशीवासीकोपिविप्रबटुरागात् तेनास्म
त्पितुःपुरःकाशीवासफलंव्यावर्णितंततोस्मत्ता
तःबाल्यादारभ्यचौर्यंकुर्वाणोदैववशात्स्वपापा
न्निवृत्तोवैराग्यात्सकुटुंबःकाशीमेष्यति तदर्थ
मिदंद्रविणजातं श्लकुंतः महद्भाग्यंतवपितुःत
थाहि श्लोकः वाराणसीपुरीवासवासनावासि
तात्मना किंशुनासमतांयातिवराकःपाकशास
नः ईश्वरंकर्मसस्यानांक्षेत्रंवाराणसीपुरी यत्रसं
लभ्यतेमोक्षःसमंचंडालपंडितैः मरणंमंगलंय
त्रविभूतिश्चविभूषणं कौपीनंयत्रकौशेयंसाका
शीकेनमीयते एवमुभयोःसंवादंश्रुत्वाराजातुतो
ष अचिंतयच्चमनसिकर्मणांगतिःसर्वथैववि
चित्रा उभयोरपिपवित्रामतिरितिततोराजावि
निवृत्त्य भवनांतरेपितृपुत्रावपश्यत् तत्रपितापु
त्रंप्राह इदानींपरिज्ञातशास्त्रतत्वोपिनृपतिः का
र्पण्येनकिमपिनप्रयच्छति किंतु श्लोकः अर्थि
निकवयतिकवयतिपठतिचपठतिस्तवोन्मुखेस्तौ
ति पश्चाद्यामीत्युक्तेमौनीदृष्टिंनिमीलयति रा
जाप्येतच्छ्रुत्वा तत्समीपंप्राप्यमैवंवदेतिस्वगात्रा
त्सर्वाभरणान्युत्तार्यदत्वातस्मैततोगृहमासाद्य
कालांतरेसभामुपविष्टःकालिदासंप्राह सखे

श्लोकः कवीनांमानसंनौमितरतिमतिभांभसा ततःकविराह यस्योतेनपर्यासीव भुवनानिचतुर्दश ततोराजाप्रत्यक्षरमुक्ताफललक्षंददौ ततः प्रविशतिद्वारपालः देवकोपिकौपीनावशेषोविद्वान्द्वारितिष्ठतीति राजाप्रवेशय ततःप्रवेशितः कविरागत्यस्वस्तीत्युक्त्वा तूष्णएवोपविष्टःप्राह श्लोकः इहनिवसतिमेरुःशेखरोभूधराणामिह हिनिहितभाराःसागराःसप्तचैव इदमतुलमनंतं भूतलंभूरिभूतोद्भवधरणसमर्थस्थानमस्मद्विधानां राजा महाकवेकिंतेनाम अभिधत्तवकविः नामग्रहणंनोचितंपंडितानांतथापिवदामीयदि जानासि श्लोकः नहिस्तनंधयीबुद्धिर्गंभीरंगाहतेवचः तलंतोयनिधेर्द्रष्टुंयष्टिरस्तिनवैणवी देवाकर्णय श्लोकः च्युतामिंदोर्लेखांरतिकलहभग्नंचवलयंसमंचक्रीकृत्यप्रहसितमुखीशैलतनया अवोचद्यंपश्येत्यवतुगिरिशःसाचगिरिजासचक्रीडाचंद्रोदशनकिरणापूरिततनुः कालिदासः सखेक्रीडाचंद्रचिराद्दृष्टोसि कथमीदृशीतेदशामंडलेमंडलेविराजत्यपिराजनिबहुधनवति क्रीडाचंद्रः श्लोकः धनिनोप्यदानविभवागण्यंतेधुरिमहादरिद्राणांहंतीनयतःपिपासामतःसमुद्रोपिमरुरेव किंच उपभोगकातराणांपुरुषाणामर्थसंचयपराणां कन्यामणिरिवसदनेतिष्ठत्यर्थःपरस्यार्थे सुवर्णमणिकेयूराङ्गदैरैर

न्यभू भृतः कलयैवपदं भोजतेषामाप्नोतिसारवित् सुधामयानीवसुधांगलंतिविदग्धसंयोजनमंतरेणकाव्यानिनिर्व्याजमनोहराणिवारांगनानामिवयौवनानि ज्ञायतेजातुनामापिनराज्ञः कवितांविना कवेस्तद्व्यतिरेकेणनकीर्तिःस्फुरतिक्षितौ मयूरः तेवंद्यास्तेमहात्मानस्तेषांलोकेस्थिरंयशः येनिवद्धानिकाव्यानियेचकाव्येप्रकीर्तिताः वररुचिः पदव्यक्तव्यक्तीकृतसहृदयाबंधललिते कवीनांमार्गेस्मिन्स्फुरतिबुधमात्रस्यधिषणा नचक्रीडालेशव्यसनपिशुनोयंकुलवधूकटाक्षाणांपंथाःसखलुगणिकानामविषयः राजाक्रीडाचंद्राय विंशतिगजेंद्रान्ग्रामपंचकंचददौ ततोराजानंकविस्तौति कंकणंनयनद्वंद्वं तिलकंकरपल्लवे अहोभूषणवैचित्र्यंभोजप्रत्यर्थियोषितां तुष्टोराजापुनरक्षरलक्षंददौ ततःकदाचित्कोपिजराजीर्णसर्वांगसंधिः पंडितोरामेश्वरनामासभामभ्यगात् सचाह श्लोकः पंचाननस्यसुकवेगजमांसैर्नृपश्रिया पारणाजायतेक्वापिसर्वदैवोपवासिनः वाहानांपंडितानांचपरेषामपरोजनः कवींद्राणांगजेंद्राणांग्राहकोनृपतिःपरः एवंहि सुवर्णैःपट्टचैलैश्चशोभास्याद्दारयोषितां पराक्रमेणदानेनराजंतेराजनंदनाः इत्याकर्ण्यराजारामेश्वरपंडितायसर्वाभरणान्युत्तार्यलक्षद्वयंप्रायच्छत् ततस्तौतिकविः श्लोकः भोज

त्वत्कीर्तिकांताया नभोभालस्थितं महत् कस्तूरीतिलकं राजन् गुणाकर विराजते बुधाग्रे न गुणान् ब्रूयात् साधु वेत्ति यतः स्वयं मूर्खाग्रेपि च न ब्रूयात् बुधः प्रोक्तं न वेत्ति सः तेन च मत्कृताः स वैरामेश्वरकविः श्लोकः ख्यातिं गमयति सुजनः सुकविर्विदधाति केवलं काव्यं पुष्णाति कमलमंभो लक्ष्म्या तु रविर्नियोजयति ततस्तुष्टो राजा प्रत्यक्षरं लक्षं ददौ राजेंद्रं कविः प्राह श्लोकः कविस्त्वं नशृणोस्येव कृपणः कीर्तिवर्जितः नपुंसकः किं कुरुते पुरःस्थितमृगीदृशा सीता प्राह हता दैवेन कवयो वराकास्ते गजा अपि शोभा ने जायते तेषां मंडलेंद्रगृहं विना कालिदासः अदातृमानसं क्वापि न स्पृशंति कवेर्गिरः दुःखायैवातिवृद्धस्य विलासास्तरुणीकृताः राजा प्रतिपंडितं लक्षं लक्षं दत्तवान् ततः कदाचिद्राजा समस्तादपि कविमंडलादधिकं कालिदासमवलोक्य आयांतं परं वेश्यालोलत्वेन चेतसि खेदलवं चक्रे तदा सीता विद्वद्वंदिता तदभिप्रायं ज्ञात्वा प्राह देव श्लोकः दोषमपि गुणवति जने दृष्ट्वा गुणरागिणो न खिद्यंते प्रीत्यैव शशिनि पतितं पश्यति लोकः कलंकमपि तुष्टो राजा सीतायै लक्षं ददौ तथापि कालिदासं यथापूर्वं न मानयति यदा तदा स च कालिदासो राज्ञोभिप्रायं विदित्वा तुलामिषेण प्राह श्लोकः प्राप्य म

माणयद्वींकोनामास्ते तु लेवलेपस्ते नयसिग
रिश्वमधस्तात्तदितरसुधेस्तरांकुरुषे पुनराह
यस्यास्ति सर्वत्रगतिःसकस्मात्स्वदेशरागेणहि
यातिखेदं तातस्यकूपोयमिति ब्रुवाणाःक्षारंज
लंकेपुरुषाःपिबंति ततोराज्ञाकृतामवज्ञांमन
सिविदित्वाकालिदासोदुर्मनाः निजवेश्मययौ
श्लोकः अवज्ञास्फुटितंप्रेमसमीकर्तुंकईश्व
रः संधिंनयातिस्फुटितंलाक्षालेपेनमौक्तिकं
ततोराजापिखिन्नस्थितः ततोलीलावती खि
न्नंदृष्ट्वाराजानंविषादकारणमपृच्छत् राजाच
रहसिसर्वंतस्यैप्राह साचराजमुखेनकालिदा
सावज्ञांज्ञात्वापुनःप्राह देवप्राणनाथसर्वज्ञोसि
श्लोकः स्नेहोहिवरमघटितोनवरंसंजातवि
घटितस्नेहः हृतनयनोहिविषादीनविषादीभव
तिसखलुजात्यंधः परंतुकालिदासःकोपिभार
त्याःपुरुषावतारः तत्सर्वभावेनसेमानयैनंविद्व
द्भ्यः पश्य श्लोकः दोषाकरोपिकुटिलोपिक
लंकितोपिमित्रावसानसमयेविहितोद यो
पि चंद्रस्तथापिहरवल्लभतामुपैति नैवाश्रिते
षुगुणदोषविचारणास्यात् राजाप्रियेसर्वमेत
त्सत्यमेवेत्यंगीकृत्यश्वःकालिदासंप्रातरेवसं
तोषयिष्यामीत्यवोचत् अन्येद्यूराजादंतधा
वनादिविधिंविधायनिवर्तितनित्यकृत्यःसभां
माप पंडिताःकवयश्चगायकाअन्येप्रकृतय

श्चसर्वेसमाजग्मुः कालिदासमेकमनागतंवी क्ष्यराजास्वसेवकमेकं तदाकारणाय वेश्यागृहं प्रेषयामास सचगत्वाकालिदासंनत्वाप्राह क वींद्रत्वामाकारयतिभोजनरेंद्र इति ततःकवि र्व्यचिंतयत् गतेन्हिनृपेणावमानितोहमद्य प्रा तरेवाकारणेकिंकारणमिति श्लोकः यंयंनृपो नुरागेणसम्मानयतिसंसदि तस्यतस्योत्सार णाययततेराजवल्लभाः किंतुविशेषतोमाद्याञ्ज न्वहंमान्यमानेमपिमायाविनोमत्सराद्दूरंबोधयं ति श्लोकः अविवेकमतिर्नृपतिर्मन्त्रिषुगुणव त्सुमंत्रितग्रीवः यत्रखलाश्चप्रबलास्तत्रकथं सज्जनावसरः इतिविचारयन्सभामागछत् ततोदूरेसमायांतंवीक्ष्यसानंदमासनादुत्थाय सुकवेमस्त्रियतमाद्य कथंविलंबःक्रियत इति भाषमाणःपंचषट्पदानिसन्मुखोगछति ततो निखिलापिसभास्वासनादुत्थितासर्वेसभासद श्चचमत्कृताः वैरिणश्चास्यविच्छायवदनाब भूवुः ततोराजानिजकरकमलेन अस्यकरक मलमवलंब्यस्वासनदेशंप्राप्यतंचसिंहासनेउ पवेश्यस्वयंचतदाज्ञयातत्रैवोपविष्टः ततोरा ज्ञासिंहासनारूढेकालिदासेबाणकविर्दक्षिणं बाहुमुधृत्यप्राह श्लोकः भोजःकलाविद्रुद्रो वाकालिदासस्यमाननात् विबुधेषुकृतोराजा येनदोषाकरोप्यसौ ततोस्यविशेषेणविद्वद्भिः

सहवैरानलः प्रदीप्तः ततः कैश्चिद्बुद्धिमद्भिः मंत्रवि
त्वासर्वैरपि विद्वद्भिः भोजस्य तांबूलवाहिनी दासी
धनकनकादिना संमानिता ते च तां प्रत्युपायमूचुः
सुभगे अस्मत्कीर्तिमसौ कालिदासो गलयति अ
स्मासु कोपि नैतेन कलासाम्यं प्रवहते वत्सैयथैनं
राजा देशांतरं निःसारयति तद्भवत्या कर्तव्यमिति
दासी प्राह भवद्भ्यो हारं प्राप्य मयायुष्मत्कार्यं क्रि
यते तन्मम प्रथमं हारो दातव्य इति ततः सा तांबू
लवाहिनी तैर्दत्तं हारमादाय व्यचिंतयत् तथाहि
बुधैरसाध्यं किंवास्ति ततः समतिक्रामत्सु कति
पयवासरेषु दैवादेकाकिनि प्रसुप्ते राजनि चर
णसंवाहनादिसेवामस्य विधाय तत्रैव कपटेन नेत्रे
निमील्य सुप्ता ततश्चरणचलनेन राजानमीषज्जाग
रूकं सम्यग्ज्ञात्वा प्राह सखि मदनमालिनि सद्गुरा
त्मा कालिदासः दासीवेषेण अंतःपुरं प्राप्य लीलादे
व्या सह रमयति राजा तच्छ्रुत्वा उत्थाय प्राह त
रंगवति किं जागर्षीति सा च निद्राव्याकुलेव न शृ
णोति राजा च तस्या अपध्वनिं श्रुत्वा व्यचिंतय
त् इयं तरंगवति नीद्रायां स्वप्नवशं गता वासना
वशाद्दृष्टाद्दुश्चरितं प्राह स च स्त्रीवेषेणांतःपुरमा
गच्छतीत्येतदपि संभाव्यते को नाम स्त्रीचरितं वे
देति ततश्चेत्थं विचार्य राजा परेद्युः प्रातरात्म
नि कृत्रिमज्वरं विधाय शयानः कालिदासं दासी
मुखेन आनाय्य तदागमनानंतरं तयैव लीलादे

वींचानाय्यदेवींप्रत्यवदत् प्रियेइदानीमेवमयापथ्यं
भोक्तव्यमिति इत्युक्तेसापितथैवेति पथ्यंगृहीत्वा
राज्ञो रजतपात्रेदत्वा तत्रमुद्गदालींप्रत्यवेषयत् त
तःराजापितयोरभिप्रायंजिज्ञासमानः श्लोकार्धंप्रा
ह मुद्गदालीगदव्यालीकवींद्रवितुषाकथमिति त
तःकालिदासःदेव्यांसमीपवर्तिन्यामपि उत्तरार्धंप्रा
ह अंधोवल्लभसंयोगेजाताविगतकंचुकी देवीत
च्छ्रुत्वापरिज्ञातार्थस्वरूपासरस्वतीवतदर्थंविदि
त्वास्मेरमुखीमनागिवबभूव राजाप्येतद्दृष्ट्वाविचा
रयामास इयंपुराकालिदासेस्निह्यति अनेनएत
स्यांसमीपवर्तिन्यामपि इत्थमभ्यधायि इयंचस्मे
रमुखीबभूव स्त्रीणांचरित्रंकोवेद श्लोकः अश्व
प्लुतंवासवगर्जितंचस्त्रीणांचचित्तंपुरुषस्यभाग्यं
अवर्षणंचाप्यतिवर्षणंचदेवोनजानातिकुतोमनु
ष्यः किंस्वयंब्राह्मणः दारुणापराधित्वेनहंतव्य
इति विशेषेणसरस्वत्याःपुरुषावतारइतिविचा
र्यकालिदासंप्राह कवेसर्वथाअस्मद्देशेनस्थात
व्यंकिंबहुनोक्तेनप्रतिवाक्यंकिमपिनवक्तव्यं त
तःकालिदासोपिवेगेनोत्थायवेश्यागृहमेत्यतांप्रत्या
ह प्रियेअनुज्ञांदेहि मयिभोजःकुपितःस्वदेशेन
स्थातव्यमित्युवाच अहह श्लोकः अघटितघ
टितानिघटयतिघटितघटितानिदुर्घटीकुरुते वि
धिरेवतानिघटयतियानिपुमान्नैवचिंतयति किंच
किमपिविहइंदचेष्टितमेवेतिप्रतिभाति तथाहि

श्लोकः बहूनामल्पसाराणांसमवायोदुरत्ययः
तृणैर्विधीयतेरज्जुर्बध्यंतेतेनदंतिनः ततोविलास
वतीनामवेश्यातमाह श्लोकः तदेवास्यपरंमित्रं
यत्रसंक्रामतिद्वयं दृष्टेसुखंचदुःखंचप्रतिच्छाये
वदर्पणे दयितमपिविद्यमानायांकिंतेराज्ञा किं
वाराजदत्तेनवित्तेनकार्यंसुखेननिःशंकंतिष्ठमद्गृ
हांतःकुहरइति ततःकालिदासःतत्रैववसन् क
तिपयदिनानिगमयामास ततःकालिदासेगृहान्नि
र्गतेराजानंलीलादेवीमाह देवकालिदासकवि
नास्माकंनितांतंनिबिडतमामैत्री तदिदानीमनुचि
तंकस्मात्कृतं यस्यदेशेप्यवस्थानंनिषिद्धं श्लोकः
इक्षोरग्रात्क्रमशःपर्वणिपर्वणियथारसविशेषः
तद्वत्सज्जनमैत्रीविपरीतानांचविपरीताशोकारा
तिपरित्राणंप्रीतिविस्रंभभाजनं केनरत्नमिदंसृ
ष्टंमित्रमित्यक्षरद्वयं राजाप्येतल्लीलादेवीवचनमा
कर्ण्याह देविकेनापिममेत्यभिधायि तत्कालि
दासोदासीवेषेणअंतःपुरमासाद्यदेव्यासहरमतइ
ति मयाचैतद्व्यापारजिज्ञासयाकपटज्वरेणापिभ
वतीचवीक्षितौ ततःसमीपवर्तिन्यामपित्वय्युत्तरा
र्धमित्थमाह तच्चाकर्ण्यत्वयापिकृतोहासः तत
श्चसर्वमेतद्दृष्ट्वाब्राह्मणहननभीरुणामयादेशान्निः
सारितःसोचनदाक्षिण्येनहन्मीति ततःहासपरा
देवीचमत्कृतामाह निःशंकेदेवअहमेवधन्याय
स्यास्त्वंपतिरीदृशः यस्यमाभुक्तशीलायाःममम नः

कथमन्यत्रगच्छति यतःसर्वेकामिनीगिरपिकां
तोपभोगेस्मर्तव्योसि अहह देवस्त्वंयदिमांसतीम
सतीवाअकृत्वागमिष्यसितर्ह्यहंसर्वथामरिष्य इ
ति ततोराजापिप्रियेसत्यंवदसीतिततःसनृपतिः
पुरुषैरहिमानयामास तन्नलोहंगोलकंकारया
मास धनुश्चसज्जंचक्रे ततोदेवीस्नातानिजपाति
व्रत्यानलेनदेदीप्यमानासुकुमारगा त्रीसूर्यमव
लोक्यप्राह जगच्चक्षुस्त्वंसर्वसाक्षीसर्ववेत्सि
श्लोकः जाग्रतिस्वप्नकालेचसुषुप्तौयदिमेपतिः
भोजएवपरस्त्वान्योमच्चितेभावितोसिन इत्युक्त्वाततो
दिव्यत्रयंचक्रे ततःशुद्धायामंतःपुरेलीलावत्यांलज्जा
नतशिराःनृपतिःपश्चात्तापात्पुरोदेविक्षमस्वपापिष्ठं
मांकिंवदामीतिकथयामास राजाचतदाप्रभृतिन
निद्रातिनचभुंक्तेनकेनचिदुक्ति केवलमुद्विग्नम
नाःस्थित्वादिवानिशंप्रविलपति किंनाममम ल
ज्जाकिंनामदाक्षिण्यंक्वगांभीर्यंहाहाकवेकविको
टिमुकुटमणेकालिदासहाममप्राणसमहामूर्खेन
किमश्राव्यंश्रावितोसि अवाच्यमुक्तोसीतिप्रसुप्त
इवग्रहग्रस्तइवमायाविध्वस्तइवपपात ततःप्रि
याकरकमलसिक्तजलसंजातसंज्ञःकथमपिता
मेवप्रियांवीक्ष्यस्वात्मनिंदापरःपरमतिष्ठत् ततो
निशानाथहीनेवदिन करहीनेवदिनश्रीर्वि
योगिनीवयोषित् शक्रहितेवसुधमानभातिभो
जभूपालसभारहिताकालिदासेन तदाप्रभृतिन

कस्यचिन्मुखे काव्यं न कोपि विनोद सुंदरं वचो वक्ति ततो गतेषु केषुचिद्दिनेषु कदाचिद्गवाक्षपूर्णेन्दु मंडलं पश्यन् पुरश्चलीलादेवीमुखेंदुं वीक्ष्य प्राह तुलणं अणुअणुसरइ ग्लोसौ मुहचंदसखुएदाये कुत्रचपूर्णेपि चंद्रमसि नेत्रविलासाः कदावाचो विलसितं प्रातश्चोत्थितः प्रातर्विधीन्विधाय सभां प्राप्य राजा विद्वद्वरान्प्राह अहोकवयः इयं समस्यापूर्यतां ततः पठति तुलणं अणुअणुसरइ ग्लोसौ मुहचंदसखुएदाये पुनराह इयं चेत्समस्या न पूर्येत भवद्भिः मद्देशे न स्थातव्यमिति ततो भीतास्ते कवयः स्वानि गृहाणि जग्मुः चिरं विचारितेप्यर्थे कस्यापि नार्थसंगतिः स्फुरति ततः सर्वैर्मिलित्वा बाणः प्रेषितः ततः सभां प्राप्याह राजानं देव सर्वैर्विद्वद्भिरहं प्रेषितः अष्टवासरानवधिमभिधेहि नवमेन्हि पूरयिष्यंति ते न चेद्देशान्निर्गछंति ते राजा अस्त्वित्याह ततो बाणः तेषां विज्ञाप्य राजसंदेशं स्वगृहमगात् ततोष्टौ दिवसाः अतीताः अष्टमदिनरात्रौ मिलितेषु तेषु कविषु बाणः प्राह अहो तारुण्यमदेन राजसन्मानमदेन किंचिद्विद्यामदेन कालिदासो निःसारितो भवतु समेभवंतः सर्व एव कवयः विषमे स्थाने तु स एक एव कविः तेनिःसार्य इदानीं किं नाम महत्त्वमासीत् स्थिते तस्मिन् कथमियमवस्थास्माकं भवेत् तं निःसारेयायावुद्धिः कृता सा भवद्भिरेव अनुभूयते श्लो

कः सामान्यविप्रद्वेषेच कुलनाशो भवेत्किल उमारू
पस्य विद्वेषे नाशः कविकुलस्य हि ततः सर्वे गाढं कल
ह्यायंतेस्म मयूरादयश्च ततस्ते सर्वान् कलहान्निवा
र्य सद्यः प्राहुः अद्यैवावधिः पूर्णः कालिदासमंतरेण
नकस्यचित्सामर्थ्यमस्ति समस्यापूरणे श्लोकः सं
ग्रामेषु भटेंद्राणां कवीनां कविमंडले दीप्तिर्वा दीप्ति
हानिर्वा मुहूर्तेनैव जायते यद्दिरोच तेततो द्यैवम
ध्यरात्रे प्रमुदितचंद्रमसि निगूढमेव गच्छामः संप
त्तिसंभारमादाय यदि नगम्यते श्वो राजसेवका अ
स्मान्बलान्निःसारयंति तदा देहमात्रेणैवास्माभिर्गं
तव्यं तदाद्य मध्यरात्रे गमिष्याम इति सर्वे निश्चित्य
गृहमागत्य वलीवर्धव्यूहेषु शकटेषु संपद्भारमारोप्य
रात्रावेव निष्क्रांताः ततः कालिदासः तत्रैव रात्रौ वि
लासवतीसद्नोद्याने वसन् पथि गच्छतां तेषां गिरं
श्रुत्वा वेश्याचेटीं प्रेषितवान् प्रिये पश्य क एते गच्छं
ति ब्राह्मणा इव ततः सा समेत्य सर्वानपश्यत् उपेत्य च
कालिदासं प्राह श्लोकः एकेन राजहंसेन या शोभा
सरसो भवत् न सा बकसहस्रेण परितस्तीरवासि
ना सर्वे च बाणमयूरप्रमुखाः पलायंते नात्र संशय
इति कालिदासः प्रिये वेगेन वासोसि भवनादानय
यथा पलायमानान् विप्रान् रक्षामि श्लोकः किंपौ
रुषं रक्षति येन नार्तान् किं वा धनं नार्थिजनाय य
त्स्यात् सा किं क्रिया या न हितानुबद्धा किं जीवितं
साधुविरोधि यद्वै ततः स कालिदासश्चारवेषं वि

धायखड्गमुद्धृत्य कोशार्धमुत्पारंगत्वा तेषामभिमु
खमागत्यसर्वान्निरूप्य जयेत्याशीर्वचनमुदीर्यप
श्चच्चारणभाषया अहोविद्यावारिधयोभोजस
भायांसंप्राप्त महत्त्वातिशयाः बृहस्पतय इव संभूय
कुत्र जिगमिषवोभवंतः कच्चित्कुशलं वोराजाच
कुशलीअस्माभिःकाशीदेशादागम्यते भोजदर्श
नायचित्तस्पृहयाततःपरिहासंकुर्वंतःसर्वेनिष्क्रां
ताः ततस्तेषुकश्चित्तद्गिरमाकर्ण्य तंचचारणंम
न्यमानः कुतूहलेनविपश्चित्प्राह अहोचारणशृणु
त्वयापश्चादपिश्रोष्यतएव अतोमयाअद्यैवोच्य
ते राज्ञाकिलैभ्योविद्वद्भ्यःपूरणायसमस्योक्तात
त्पूरणाशक्ताः कुपिताराज्ञादेशांतरेक्वचिज्जिगमिष
वएतेनिश्चक्रमुः चारणः राज्ञाकावासमस्याप्रोक्ता
ततःपठतिसविपश्चित् तुलणंअणुअणुसरइग्लौ
सोमुहचंदःसखुएदाये चारणःएतत्साध्वेवगूढा
र्थंएतत्पूर्णेंदुमंडलंवीक्ष्यराज्ञापाठि एतस्योत्तरार्ध
मिदंभवितुमर्हति अणुइदिवंणयदि कहअणु
किदितसपडिपदिचंदस सर्वेश्रुत्वाचमत्कृताः त
तःचारणःसर्वान्प्रणिपत्यनिर्ययौ ततःसर्वेविचा
रयंतिस्म अहोइयंसाक्षात्सरस्वतीपुंरूपेणसर्वेषां
अस्माकंपरित्राणायागता नायंभवितुमर्हति म
नुष्यः अद्यापिकिमपिकेनापिनज्ञायते ततःशीघ्र
मेवगृहमासाद्यशकटेभ्योभारमुत्तार्य प्रातःसर्वै
रपिराजभवनमागंतव्यंनचेच्चारणएवनिवेदयिष्य

तिततः स्नाति तिगच्छाम इतियोजयित्वा तथा चक्रुः
ततोराजसभां गत्वाराजानमालोक्य स्वस्त्युक्त्वा
विविशुः ततोबाणः प्राह देवसर्वज्ञेनयत्त्वयापठ्य
ते तदीश्वर एववेदकेमीवराकाउदरंभरयः द्विजाः
तथाप्युच्यते तुलणंअणुअणुसरइ ग्लौसोसुहचं
दसरवुयेदाये अणुइदिवंणयदिकहअणुकिदि
तंसपडिपदिचदंस तुलनामन्वनुसरति ग्लौसः
सुखचंद्रस्य खल्वेतस्याः अन्विति वर्ण्यते कथम
नुकृतिस्तस्य प्रतिपदिचंद्रस्य राजा यथाव्यवसि
तस्याभिप्रायं विदित्वा सर्वथाकालिदासः दिवस
प्राप्यस्थाने निवसति उपायैश्च सर्वेसाध्यं ततो
बाणाय रुक्माणां पंचदशलक्षाणि प्रादात् संतो
षमिषेणेव विद्वद्वृंदं स्वंस्वं सदनं प्रतिप्रेषितं गते
चविद्वन्मंडलेशनैर्द्वारपालायादिष्टं राज्ञा यदिकेचि
त् द्विजन्मानआयास्यंति तदा गृहमध्य मानेतव्याः
ततः सर्वमपि वित्तमादाय स्वगृहं गते बाणे केचित्पं
डिता आहुः अहोबाणेनानुचितंव्यवधायियद्दसा
वपि अस्माभिः सहनगरान्निष्क्रांतोपि सर्वमेवधनं
गृहीतवान् सर्वथाभोजस्य बाणस्वरूपं ज्ञापयि
ष्यामः यथाकोपि नान्यायं विधत्ते विद्वत्सु तत
स्तेराजानमासाद्य ददृशुः राजातानाह एतत्स्व
रूपं ज्ञातमेव भवद्भिर्यथार्थतयावाच्यं ततस्तैः
सर्वमेव निवेदितं ततः राजा विचारितवान् सर्व
था कालिदासश्चारणवेषेण मद्भयान्मदीयनगरम

च्यास्ते ततश्चांगरक्षकानादिदेश अहो पलाय्यं तां तुरंगाः ततः क्रीडोद्यानप्रयाणेपटहध्वनिरभवत् अहो इदानीं राजा देवपूजाव्यग्र इति श्रुश्रुमः पुनरिदानीं क्रीडोद्यानं गमिष्यतीति व्याकुलाः सर्वे भटाः संभूयपश्चाद्यांतिततोराजातैर्विंदुभिः सहअश्वमारुह्यरात्रौ यत्रचारणप्रसंगः समजनि तत्प्रदेशं प्राप्तः ततोराजाचरतां चौराणां पदज्ञाननिपुणानाहूयप्राह अनेनवर्त्मना यः कोपिरात्रौ निर्गतः तस्य पदानि अद्यापि दृश्यंते तानिपश्यंत्विति ततोराजप्रतिपंडितं लक्षं दत्वा तान्प्रेषयित्वा चस्वभवनमगात् तेचपदज्ञाराजाज्ञया सर्वतश्चरंतोपितमनवेक्षमाणा विमूढाइवासन् ततश्चलंबमानेसवितरि कामपि दासीमेकंपदत्राणंत्रुटितमादाय चर्मकारवेश्मगच्छंतीं दृष्ट्वा तुष्टाइवासन् ततस्तत्पदत्राणं तया चर्मकारकरेन्यस्तं वीक्ष्य तैश्च तस्याः करान्निक्षेणादायरेणुपूर्णेपथि मुक्त्वा तदेव पदं तस्येति ज्ञात्वा तां च दासीं क्रमेण वेश्याभवनं विशंतीं वीक्ष्य तस्याः मंदिरं परितोवेष्टयामासुः ततश्च तैः क्षणेन भोजश्रवणपथविषयं अभिज्ञानवार्तामापिता ततोराजासपौरः सामात्यः पद्भ्यामेव विलासवतीभवनमगात् ततस्तच्छ्रुत्वा विलासवतीं प्राह कालिदासः प्रियेमत्कृते किंकष्टंतेपश्य विलासवती सुकवे श्लोकः उपस्थितेविप्लवएव पुंसां समस्तभावः परिमीयतेतः अवातिवायौ नहितूलराशेः

गिरीश्वरकश्चित्प्रतिभातिभेदः मित्रस्वजनबंधूनां
बुद्धेर्वित्तस्यचात्मनः आपन्निकषपाषाणो जनोजा
नातिसारतां अप्रार्थितानिदुःखानियथैवायांति
देहिनः सुखानिचतथामन्ये दैन्यमत्रातिरिच्यते
सुकवेराज्ञात्वयिमनाङ्गिराकृतेवचसापिमयासहेदं
दासीवृंदंप्रदीप्तवन्हौपतिष्यति कालिदासःप्रियेनै
वंमंतव्यंमांदृष्ट्वाविकासीकृतास्योभोजःपादयोःपति
ष्यतीति ततोवेश्यागृहंप्रविश्यभोजःकालिदासं
दृष्ट्वाससंभ्रममाश्लिष्यपादयोःपतति सराजापठ
तिच श्लोकः गच्छतस्तिष्ठतोवापिजाग्रतःस्वपतो
पिवा माभून्मनःकदाचिन्मेत्वयाविरहितंकवे का
लिदासस्तुखाब्जोऽवनताननस्तिष्ठति राजाचका
लिदाससुखंसुन्नमभ्याह कालिदासकलावासदा
सवक्त्रालितोयदि राजमार्गेव्रजन्नत्रपरेषांतत्रका
त्रपा धन्यांविलासिनींमन्ये कालिदासोयदेतया
निबद्धःस्वगुणैरेषःशकुंतइवपंजरे राजानेत्रयोः
हर्षाश्रुमार्जयति कराभ्यांकालिदासस्य ततःतत्या
प्तिप्रसन्नोराजाब्राह्मणेभ्यःप्रत्येकंलक्षंददौ निज
तुरगेचकालिदासमारोप्यसपरिवारःनिजगृहंय
यौ कियत्स्वपिकालेतिक्रांतेराजाकदाचित्संध्या
मालोक्यप्राह श्लोकः परिपततिपयोनिधौपतं
गः ततोबाणःप्राह सरसिरुहासुदरेषुमत्तभृंगः
ततोमहेश्वरकविः उपवनतरुकोटरेविहंगः त
तःकालिदासःप्राह युवतिजनेषुशनैःशनैरनंगः

तुष्टोराजालक्षंलक्षंददौ चतुर्थचरणस्यलक्षद्वयं ददौ कदाचिद्राजाबहिरुद्यानमध्येमार्गप्रत्याग छंतेकमपिविप्रंददर्श तस्यकरेचर्ममयंकमंडलुं वीक्ष्यतंचातिदरिद्रंज्ञात्वामुखश्रियाविराजमानं चावलोक्यतुरंगंतदग्रेनिधायाह विप्रचर्मपात्रं किमर्थंपाणौवहसीति सच विप्रःनूनंमुखशोभ यामृदूक्त्याच भोजइतिविचार्याह देववदान्यशि रोमणौभोजेपृथ्वींशासतिलोहताम्राभावःसमज नितेनचर्ममयंपात्रंवहामीति राजाभोजेशासति लोहताम्राभावेकोहेतुः तदाविप्रःपठति अस्य श्रीभोजराजस्यद्वयमेवसुदुर्लभं शत्रूणांशृंखलैर्लोहं ताम्रंशासनपत्रकैः ततस्तुष्टोराजाप्रत्यक्षरं लक्षंददौ कदाचिद्द्वारपालःप्राह धारेंद्रदूरदेशा दागतःकश्चिद्विद्वान्द्वारितिष्ठति तत्पत्नीचतत्पु त्रःसपत्नीकःअतःअतिपवित्रंविद्वत्कुटुंबंद्वारि तिष्ठतीति राजा अहोगरीयसीशारदाप्रसादपद्धतिः तस्मिन्नवसरेगजेंद्रपालआगत्यराजानंप्रण म्याह भोजेंद्रसिंहलदेशाधीश्वरेणसपादशतंग जेंद्राःप्रेषिताःषोडशमहामणयश्च ततोबाणःप्रा ह श्लोकः स्थितिःकवीनामिवकुंजराणांस्वमंदि रेवानृपमंदिरेवा गृहेगृहेकिंमशका इवैतेभवंति भूपालविभूषितांगाः ततोराजागजावलोकनायब हिरगात् ततस्तंविद्वत्कुटुंबंवीक्ष्यचोरपंडितोरा ज्ञःप्रियोहमितिगर्वंदधार यन्मयाराजभवनमध्ये

गम्यतं विद्वत्कुटुंबं तु द्वारपालज्ञापितमपिबहिरा स्ते तदाराजा तच्छ्रुत्वासिगर्वं विदित्वा चौलपंडितं सं धांगणान्निस्सारितवान् काशीदेशवासी कोपितंडु लदेवनामा राज्ञे स्वस्तीत्युक्त्वा तिष्ठत् राजाचतंप्र पृच्छ सुमते कुत्र निवासः वर्ततेयत्र सावाणी कृपा णी रिक्तशाखिनः श्रीमन्मालवभूपालस्तत्रदेशेव साम्यहं तुष्टोराजा तस्मैगजेंद्रसप्तकं ददौ ततः कोपिविद्वानागत्याह तपसः संपदः प्राप्यास्तत्त पोसि नविद्यते येनत्वं भोजकल्पद्रुः दृग्गोचरमुपै ष्यसि तस्मैराजा दशगजेंद्रान् ददौ ततः कश्चि द्ब्राह्मणपुत्रः भूभारवंकुर्वाणोभ्येति ततः सर्वे सं भ्रांताः कथं भूभारवंकरोषीति राज्ञोस्य दृग्गोचरमा नीतः पृष्टः सप्राह देवत्वद्दानपाथोधौ दारिद्र्यस्य निमज्जतः न कोपिहिकरालंबं दत्तेमत्तेभदायकः ततस्तुष्टोराजा तस्मै त्रिंशत् गजेंद्रान्प्रादात् त तः प्रविशति पत्नीसहितः कोपिविलोचनो विद्वान् स्वस्तीत्युक्त्वाप्राह श्लोकः निजानपिगजान् भो जंददानंप्रेक्ष्य पार्वती गजेंद्रवदनं पुत्रं रक्षत्यद्यपु नः पुनः ततोराजा सप्तगजान् तस्मै ददौ ततोरा जा विद्वत्कुटुंबेत दैवपुरतः स्थितं वीक्ष्यं ब्राह्मणंप्रा ह श्लोकः क्रियासिद्धिः सत्वे भवति महतां नोपक रणे वृद्धद्विजः प्राह श्लोकः घटोजन्मस्थानं मृग परिजनो भूर्जवसनं वनेवासः कंदादिकमशनमेवं विधगुणः अगस्त्यः पाथोधिंयदकृतकरांभोज

कुहरे क्रियासिद्धिः सत्वे भवति महतां नोपकरणे त
तो राजा बहुमूल्यान पि षोडशमणीन् तस्मिन् ददौ त
तस्तत्पत्नी प्राह राजा अंब त्वमपि पठ देवी रथ
स्यैकं चक्रं भुजगनमिताः सप्त तुरगा निरालंबो मार्ग
श्चरणविकलः सारथिरपि रविर्यात्येवांतं प्रतिदि
नमपारस्य नभसः क्रियासिद्धिः सत्वे भवति महतां
नोपकरणे राजा तुष्टः सप्तदश गजान् सप्त रथांश्च त
स्यै तद्दौ ततो विप्रपुत्रं प्राह राजा विप्रसुत त्वमपि
पठ विप्रसुतः श्लोकः विजेतव्या लंका चरणतर
णीयो जलनिधिर्विपक्षः पौलस्त्यो रणभुवि सहाया
श्च कपयः पदातिर्मर्त्योसौ सकलमवधीद्राक्षस
कुलं क्रियासिद्धिः सत्वे भवति महतां नोपकरणे तु
ष्टो राजा विप्रसुताय अष्टादश गजेंद्रान् प्रादात्
ततः सकुमारमनोज्ञनिखिलांगावयवालंकृतां शृं
गाररसोपजातमूर्तिमिव चंपकलतामिव लावण्य
गात्रयष्टिं विप्रस्नुषां वीक्ष्य नूनं भारसाः कापि लीला
कृतिरियमिति चेतसि नमस्कृत्य राजा प्राह मातस्त्व
मप्याशिषं वद विप्रस्नुषा देव शृणु श्लोकः धनुः
पौष्पं मौर्वी मधुकरमयी चंचलदृशां दृशां कोणो बा
णः सुहृदपि जडात्मा हिमकरः स्वयं चैकोनंगः स
कलभुवनं व्याकुलयति क्रियासिद्धिः सत्वे भवति
महतां नोपकरणे चमत्कृतो राजा लीलादेवी भूष
णानि सर्वाण्यादाय तस्यै ददौ अनर्घ्यांश्च सुवर्णमौ
क्तिकवैडूर्यप्रवालांश्च प्रददौ ततः कदाचित्सीमं

तन्नामा कविः प्राह श्लोकः पंथाः संहर दीर्घतां त्यज नि
जं तेजः कठोरं रवे श्रीमन्विंध्यगिरे प्रसीद सदयं सद्यः
समीपे भव इत्थं दूरपलायनश्रमवतीं दृष्ट्वा निजप्रेय
सीं श्रीमन् भोज तव द्विषः प्रतिदिनं जल्पंति मूर्छंति च
तस्मिन्नेव क्षणे कश्चित्सुवर्णकारः प्रांतेषु पद्मराग
मणिमंडितं सुवर्णभाजनमादाय राज्ञः पुरो मुमोच
ततो राजा सीमंतकविं प्राह सुकवे इदं भाजनं काम
पि श्रियं दर्शयति ततः कविराह श्लोकः धारेश त्व
त्प्रतापेन पराभूतस्त्विषांपतिः सुवर्णपात्रव्याजेन दे
व त्वामेव सेवते ततस्तुष्टो राजा तदेव पात्रं मुक्ताफलै
रापूर्य प्रादात् कदाचिद्राजा मृगयारसेन पुरः पला
यमानं वराहं दृष्ट्वा स्वयमेकाकी तद्दूरं वनांतमासादि
तवान् तत्र कंचन द्विजवरमवलोक्य प्राह द्विज
कुत्र गंतासि द्विजः धारानगरं भोजः किमर्थं द्विजः
भोजं द्रष्टुं द्रविणेच्छया स पंडिताय दत्ते अहमपि मू
र्खेन याचे भोजः विप्र तर्हि त्वं विद्वान् कविर्वा द्विजः
महाभाग कविरहं भोजः तर्हि किमपि पठ द्विजः
भोजं विना मत्पदसरणिं न कोपि जानाति राजा म
माप्यमरवाणीपरिज्ञानमस्ति राजा च मयि स्निह्य
ति त्वद्गुणं च श्रावयिष्यामि किमपि कलाकौशलं
दर्शय विप्रः किं वर्णयामि राजा कलमानेतान्वर्ण
य विप्रः श्लोकः कलमाः पाकविनम्राः मूलतला
घ्राण सुरभिकल्हाराः पवनाकंपितशिरसः प्रायः
कुर्वंति परिमलश्लाघां राजा तस्मै सर्वाभरणान्युत्ता

र्ददौ ततःकदाचित्कुंभकार वधूः राजगृहमे
त्यद्वारपालंप्राह द्वारपाल राजाद्रष्टव्यः सआह
किंतेराज्ञाकार्यंसाचाह नतेभिधास्यामिनृपाग्र
एवकथयामिससभायामागत्यप्राह देवकुंभका
रप्रियाकाचिद्राज्ञोदर्शनाकांक्षिणीनवक्तिमस्तुः
कार्यंत्वत्पुरतःकथयिष्यति राजा प्रवेशयसास
चागत्यनमस्कृत्यवक्ति देवमृत्खननाद्दृष्टंनिधा
नंवल्लभेनमे सपश्यन्एवतप्रास्तेत्वांज्ञापयितुम
भ्यगां राजाचचमत्कृतोनिधानकलशमानया
मास तद्वारमुद्घाट्ययावत्पश्यतिराजातावत्तद्दंत
र्निर्गद्रव्यंम णिप्रभामंडलमालोक्य कुंभकारंपृ
च्छति किमेतत्कुंभकार सचाह राजचंद्रंसमा
लोक्य त्वांतुभूतलमागतं रत्नश्रेणिमिषान्मन्ये
नक्षत्राण्यभ्युपागमत् राजाकुंभकारमुखाच्छ्लो
कं लोकोत्तरमाकर्ण्यचमत्कृतः तस्मैसर्वंददौ ततः
कदाचिद्राजारात्रावेकाकीसर्वतोनगरंवेष्टितं
पश्यन् चौरगिरमाकर्णयन्चचारतदाकस्यचिद्द्वि
जस्यगृहेवैश्यःस्वप्रियांप्राह प्रियेराजात्वत्यदान
रतोपि उज्जयिनीनगराधिपतेर्विक्रमार्कस्यदा
नप्रतिष्ठांकांक्षते साकिंभोजेनप्राप्यते केश्चित्तो
त्रपरायणैर्मयूरादिकविभिर्महिमानंप्रापितोभो
जः परंतुभोजोभोजएवप्रियेश्रृणु श्लोकः आब
द्धकृत्रिमसटाजटिलांसभित्तिरारोपितोयदिपदं
मृगवैरिणश्वा मत्तेभकुंभतटपाटनलंपटस्य

नादंकरिष्यतिकथंहरिणाधिपस्य राजाश्रुत्वाविचा
रितवान् असौसत्यमेववदति ततःपुनःपुनर्वदंतं
शृणोति श्लोकः आपन्नएवपात्रंदेहीत्युच्चारणंनवै
दुष्यं उपपन्नमेवदेयंत्वागस्ते विक्रमार्ककिमुवर्ण्यः
विक्रमार्कत्वयादत्तंश्रीमन्ग्रामशताष्टकं अर्थिनेद्वि
जपुत्राय भोजेत्वन्महिमाकुतः प्राप्नोतिकुंभकारोपि
महिमानंप्रजापतेः यदिभोजोप्यवाप्नोतिप्रतिष्ठांतव
विक्रम राजा लोकेसर्वोपिजनः स्वगृहेनिःशंकंसत्यं
वदति मयावाअन्येनवासर्वथाविक्रमार्कप्रतिष्ठान
शक्याप्राप्तुं ततःकदाचित्कश्चित्कविःराजद्वारंसमा
गत्याह राजाद्रष्टव्यइति ततःप्रवेशितोराजानंस्व
स्तीत्युक्त्वा तदाज्ञयोपविष्टःपठति श्लोकः कविषुवा
दिषुभोगिषुदेहिषुद्रविणवत्सुसतामुपकारिषु धनि
षुधन्विषुधर्मधनेष्वपिक्षितितलेनहि भोजसमोनृपः
राजातस्मैलक्षंप्रादात् ततःकदाचिद्राजाक्रीडोद्या
नंप्रस्थितोमध्येमार्गकामपिमलिनांशुवसनांतीक्ष्णकर
तपनकरविदग्धमुखारविंदांसुलोचनांलोचनाभ्यां
आलोक्यपप्रच्छ कात्वंपुत्रिसाचतंश्रीभोजभूपालं
मुखश्रियाविदित्वातुष्टाप्राह नरेंद्रलुब्धकवधूः हर्ष
संभृतोराजातस्याःसदप्रबंधानुबंधेनाह हस्तेकिमे
तत् साचाह पलं राजाह क्षामंकिंसाचाह सहजंब्र
वीमिनृपतेयद्यादराच्छ्रूयते गायंतिस्वदरिप्रियाश्रुत
टिनीतीरेषुसिद्धांगनागीतंगाननतृणंचरंतिहरिणास्ते
नामिषंदुर्लभं राजातस्यैप्रत्यक्षरंलक्षंप्रादात् स

र्वाभरणान्युत्तार्य तं चतुरंगं ददौ ततो गृहमागत्य गवा
क्षे उपविष्टः तत्र चासीनं भोजं दृष्ट्वा राजवर्त्मनि स्थि
त्वा कश्चिदाह देव सकलमहीपाल आकर्णय श्लोकः
इतश्चेतश्चाद्भिर्विघटित तटः सेतुरुदरे धरित्री दुर्लंघ्या
—बहलहिमपंको गिरिरयं इदानीं निर्वृत्ते करितुरग
नीराजनविधौ न जाने यातारस्तव च रिपवः केन च प
था तुष्टो भोजः वर्त्मनि स्थितस्यैव तस्य वंश्यान् पंच ग
जान्ददौ कदाचिद्राजा मृगयारसपराधीनो हयमारु
ह्य प्रतस्थे श्लोकः ततो नदीं समुत्तीर्णं शिरस्यारोपि
तेंधनं वेषेण ब्राह्मणं ज्ञात्वा राजा पप्रच्छ सत्वरं कियन्
मानं जलं विप्र स आह जानुदघ्नं नराधिप स च मत्व
ऋतो राजाह ईदृशी किमवस्था ते स आह न हि सर्वे
भवादृशाः राजा प्राह कुतूहलात् विद्वन् याचेत्स्व को
शाधिकारिणं लक्षं दास्यति मद्वचसा ततो विद्वान्का
ष्ठं भूमौ निक्षिप्य कोशाधिकारिणं गत्वा प्राह महाराजे
न प्रेषितोहं लक्षं मे दीयतां ततस्स हसन्नाह विप्र भ
वन्मूर्तिः लक्षं नार्हति ततो विषादी स राजानमेत्याह
स पुनर्हसति देव नार्पयति राजा कुतूहलादाह लक्ष
द्वयं प्रार्थय दास्यति पुनरागत्य विप्रः लक्षद्वयं देयमि
ति राज्ञोक्तमित्याह पुनर्हसति पुनरपि भोजं प्राप्या
ह स पापिष्ठो मां हसति नार्पयति ततः कौतूहली
लीलानिधिर्महीशासनः श्रीभोजः प्राह विप्र लक्षत्रयं
मा च स्व अवश्यं स दास्यति पुनरेत्य प्राह राजा मे ल
क्षत्रयं दापयति स पुनर्हसति ततः क्रुद्धो विप्रः पुन

रेत्याह देवसनार्पयत्येव श्लोकः राजन्कनकधारा भिस्त्वयिसर्वत्रवर्षति अभाग्यछत्रसंछन्ने मयि नायांतिबिंदवः त्वयिवर्षतिपर्जन्येसर्वेपल्लविता द्रुमाः अस्माकमर्कवृक्षाणांपूर्वेपत्रेषुसंशयः एकमस्यपर भेकमुद्यमेनिरूपत्वमपरस्यवस्तुनः नित्यमुष्णमहसानिरस्यतेनित्यमंधतमसंप्रधावति ततोराजाप्राह श्लोकः क्रोधंमाकुरुमद्वाक्याद्गत्वाकोशाधिकारणे लक्षत्रयंगजेंद्राश्चदशग्राह्यात्वयाद्विज ततस्त्वांगरक्षकंप्रेषयति ततःकोशाधिकारीधर्मपत्रेलिखति श्लोकः लक्षंलक्षंपुनर्लक्षंमत्ताश्चदशदंतिनः दत्ताभोजेनतुष्टेनजानुदघ्नप्रभाषणात् ततःसिंहासनमलंकुर्वाणे श्रीभोजनृपतौद्वारपालआगत्यप्राह राजन्कोपिशुकदेवनामाकविर्दारिद्र्यविडंबितोद्वारिवर्तते राजाबाणंप्राह पंडितवरसुकवेतत्त्वंविजानासि बाणः देवशुकदेवपरिज्ञानसामर्थ्याभिज्ञःकालिदासएवनान्यः राजा सुकवेसखेकालिदासकिंविजानासि शुकदेवकविंआह कालिदासः देव श्लोकः सुकविद्वितयंजानेनिखिलेपिमहीतले भवभूतिःशुकश्चायंवाल्मीकिस्त्रितयोनयोः ततोविद्वद्वृंदंवंदित्वासीताप्राह काकाःकिंकिंनकुर्वंतिक्रोंकारंयत्रयत्रवा शुकएवपरंवक्तिनृपहस्तोपलालितः ततोमयूरआह अपृष्टस्तुनरःकिंचित्योब्रूतेराजसंसदिनकेवलमसन्मानंलभतेचविडंबनां देवतथाप्य

च्यते श्लोकः कासभाकिंकविज्ञानंरसिकाःकव
यश्चके भोजकिंनामतेदानंशुकस्तुष्यतियेनसः
तथापिभवनद्वारमागतंशुकदेवः सभायामानेत
व्यएव तदाराजाविचारयति शुकदेवसामर्थ्यंश्रु
त्वाहर्षविषादयोःपात्रमासीत् महाकविरवलोकि
तइतिहर्षः अस्मैसत्कविकोटिमुकुटमणये किंना
मदेयमितिचविषादः भवतुद्वारपालप्रवेशय
ततआयांतंशुकदेवंदृष्ट्वाराजासिंहासनादुदति
ष्ठत् सर्वेपंडितास्तंशुकदेवंप्रणम्यसविनयमुप
वेशयंति सचराजातंसिंहासनेउपवेश्यस्वयंत
दाज्ञयोपविष्टःततश्शुकदेवःप्राह देवधारानाथ
श्रीविक्रमनरेंद्रस्ययादानलक्ष्मीःत्वामेवसेवते
देवमालवेंद्रएवधन्योनान्येभूभुजःयस्यतेकालि
दासादयोमहाकवयःसूत्रबद्धाःपक्षिणइवनिव
संति ततःपठति श्लोकः प्रतापभीत्याभोजस्य
तपनोमित्रतामगात् औवोवाडवतांधत्तेतद्वि
तूक्षणिकतांगता राजा तिष्ठसुकवेनापरः श्लो
कःपठनीयः श्लोकः सुवर्णकलशंप्रादात् दिव्य
माणिक्यसंभृतं भोजःशुकायसंतुष्टो दंतिनश्च
चतुःशतं इतिपुण्यपत्रेलिखित्वासर्वदत्वाकोशा
धिकारीशुकंप्रस्थापयामासराजास्वदेशंप्रतिगतंशु
कंज्ञात्वातुतोष साचपरिषत्संतुष्टा अन्यदावर्षा
कालेवासुदेवोनामकविःकश्चिदागत्यराजानंदृष्ट
वान् राजा सुकवेपर्जन्यंपठ ततःकविराह श्लोकः

नो चिंतामणिभिर्नकल्पतरुभिर्नोकामधेन्वादिभि
र्नो देवैश्च परोपकारनिरतैः स्थूलैर्नसूक्ष्मैरपि अंभो
देन निरंतरं जलभरैस्तामुर्वरां सिंचता धौरेयेण धु
रेस्वयाच्य वहता मन्ये जगज्जीवति राजालक्षं ददौ
कदाचिद्राजानं निरंतरं दीयमानमालोक्य मुख्यामा
त्यो वक्तुमशक्तो राज्ञः शयनभवनभित्तौ व्यक्तान्य
क्षराणि लिखितवान् श्लोकः आपदर्थं धनं रक्षेत्
राजा शयनादुत्थितो गच्छन् भित्तौ तान्यक्षराणि वीक्ष्य
स्वयं द्वितीयचरणं लिलेख श्रीमतामापदः कुतः अपरे
द्युः अमात्यो द्वितीयं लिखितं दृष्ट्वा स्वयं तृतीयं लिलेख
सा चेदपगता लक्ष्मीः परेद्युः राजा चतुर्थं लिखति
संचितार्थो विनश्यति ततः मुख्यामात्यः राज्ञः पाद
योः पतति देव क्षंतव्योऽयं ममापराधः अन्यथा धारा
धीश्वरमुपरि सौधभूमौ शयानं मत्वा कश्चिद्द्विज
चोरः खातपातपूर्वं राज्ञः कोशगृहं प्रविश्य बहूनि
विविधरत्नानि वैडूर्याणि हृत्वा तानि तानि परलोक
ऋणानि मत्वा तत्रैव वैराग्यमापन्नो विचारयामा
स श्लोकः यद्व्यंगाः कुष्ठिनश्चांधाः पंगवश्च दरि
द्रिणः पूर्वोपार्जितपापस्य फलमश्नंति देहिनः त
तो राजा निद्राक्षये द्विव्यशयनस्थितो विविधमणि
कंकणालंकृतं दयितवर्गं दर्शनीयमालोक्य गजतु
रगरथपदातिसामग्रीं च चिंतयन् राज्यसुखसंतु
ष्टः प्रमोदभरादाह श्लोकः चेतोहरा युवतयः सु
हृदोऽनुकूलाः सद्बांधवाः प्रणयगर्भगिरश्च भृत्याः

वलंतिदंतिनिवहास्तरलास्तुरंगाः इतिचरणत्रयंराज्ञोक्तं चतुर्थचरणंराज्ञोमुखान्ननिस्सरति सतदाचौरेणश्रुत्वापूरितं संमीलनेनयनयोर्नहिकिंचिदस्ति ततः ग्रथितोग्रंथः राजाचौरंवीक्ष्यतस्मैवीरवलयमदात् ततस्तस्करोवीरवलयमादाय ब्राह्मणगृहंगत्वाशयानंब्राह्मणमुत्थाप्यतस्मैदत्वाप्राह विप्रएत इष्टाः पाणिवलयंबहुमूल्यं अल्पमूल्येननविक्रेयं ततोब्राह्मणःपण्यवीथ्यांतद्विक्रीयदिव्यभूषणानिपट्टदुकूलानिचजग्राह ततोराजकीयाः केचनएनंचौरंमन्यमानाः राज्ञोनिवेदयंति ततोराजनिकटेनीतः राजापृच्छति विप्रधार्यंपटमपिनास्तिअद्यप्रातरेवदिव्यकुंडलाभरणपट्टदुकूलानिकुतः विप्रःप्राह श्लोकः भेकैःकोटरशायिभिर्मृतमिवक्ष्मांतर्गतंकच्छपैः पाठीनैःपृथुपंकपीठलुठनाद्यस्मिन्मुहुर्मूर्छितं तस्मिन्शुष्कसरस्यकालजलदेनागत्यतच्चेष्टितं यत्राकुंभनिमग्नवन्यकरिणांयूथैःपयःपीयते तुष्टोराजातस्मैवीरवलयंचौरप्रदत्तंनिश्चित्यस्वयंचलक्षंददौ अन्यदाकोपिकवीश्वरःविष्णुनामाराजद्वारिसमागत्यतैःप्रवेशितोराजानंदृष्ट्वास्वस्तिपूर्वकंप्राह श्लोकः धाराधीशधरामहेंद्रगणनाकौतूहलीयानयंवेधास्त्वद्गणनांचकारघटिकाखंडेनरेखांदिवि सैवेयंत्रिदशापगासमभवत्त्वत्तुल्यभूमीधराभावात्तत्यजतिस्मसोयमवनीपीठेतुषाराचलः राजातो

कोत्तरंश्लोकमाकर्ण्यकिंदेयमितिव्यचिंतयत् त
स्मिन्क्षणेतदीयकवित्वमप्रतिहृद्गमाकर्ण्यसोम
नाथाख्यकवेर्मुखंविछायमभवत् ततस्सद्वेष्या
द्राजानंप्राह देवासौसुकविर्भवतिपरमनेनक
दापिवीक्षितास्तिराजसभां यतोदारिद्र्यवारिधि
रयं अस्यचजीर्णमपिकौपीनंनास्तिततोराजा
सोमनाथंप्राह निरवद्यानिपद्यानिपद्यनाथस्य
काक्षतिः भिक्षुणाकक्षनिक्षिप्तःकिमिक्षुर्नीरसो
भवेत् ततःसर्वेभ्योतांबूलंदत्वाराजासभायाउ
दतिष्ठत् ततःसर्वैरप्यन्योन्यमित्यभिधायि
अद्यविष्णुकवेःकवित्वमाकर्ण्यसोमनाथेनस
म्यग्दौष्ट्यमकारि ततःसमुत्थिताविद्वत्परिषत्
ततोविष्णुकविरेकंपद्यंपत्रेलिखित्वासोमनाथ
कविहस्तेदत्वाप्रणम्यगंतुमारभत् अत्रसभा
यांत्वमेवचिरंनंद ततोवाचयतिसोमनाथकविः
श्लोकः एतेषुहातरुणमारुतधूयमानदावान
लैःकबलितेषुमहीरुहेषु अंभोनचेज्जलदमुं
चसिमाविमुंचवज्रंपुनःक्षिपसिनिर्दयकस्य
हेतोः ततःसोमनाथकविः निखिलमपिपट्ट
कूलवित्तहिरण्यमयितुरंगमादिसंपत्तिंकल
त्रैवस्त्रावशेषंदत्तवान् ततोराजामृगयारस
प्रवृत्तोगच्छन् तंविष्णुकविमालोक्यव्यचिंत
यत् मयाअस्मैभोजनमपिनप्रदत्तं मामना
त्यअयंसंपत्तिपूर्णस्वदेशंप्रतियास्यति तृष्णामि

विष्णुकवेस्ततःसंपत्तिः प्राप्ताकविराह सोमनाथे
नराजेंद्रदेवत्वद्गृहभिक्षुणा अद्यशोच्यतमेपूर्णम
पिकल्पद्रुमायते राजापूर्वंसभायांश्रुतस्यश्लोकस्य
अक्षरलक्षंददौ सोमनाथेनचयावद्दत्तंतावदपि
सोमनाथायदत्तवान् सोमनाथःप्राह किसलयानि
कुतःकुसुमानिवाक्वचफलानितथावनवीरुधां
अयमकारणकारुणिकोयदानतरतीहपयांसिपयोध
रः ततःविष्णुकविःसोमनाथदत्तेनराज्ञादत्तेनचतुष्टवान् न
दासीमंतकविःप्राह श्लोकः वहतिभुवनश्रेणींशेषःफलाफल
कस्थितांकमठपतिनामध्येपृष्ठंसदासचधार्यते तमपिकुरुते
क्रोडाधीनंपयोनिधिरादरात् अहहमहतांनिस्सीमानश्चरित्र
विभूतयः कदाचित्सौधतलेराजानमेत्यभृत्यःप्राह देवअखिले
ष्वपिकोशेषुयद्वित्तजातमस्तितत्सर्वंदेवेनकविभ्यो
दत्तं परंतुकोशगृहेधनलेशोपिनास्ति कोपिकविः
प्रत्यहंद्वारितिष्ठति इतःपरंकविर्विद्वान्वाकोपिस
ज्ञेनप्राप्यतइतिमुख्यामात्येनदेवसन्निधौविज्ञापनी
यमित्युक्ते राजाकोशस्थंसर्वंदत्तमितिजानन्नपिप्रा
ह अद्यद्वारस्थंकविंप्रवेशय ततोविद्वानागत्यस्व
स्तीतिवदन्प्राह श्लोकः नभसिनिरवलंबेसीदता
दीर्घकालंत्वदभिमुखविसृष्टोत्तानचंचूपुटेन जल
धरजलसाराद्दूरतस्तावदास्तांध्वनिरपिमधुरस्तेन
श्रुतश्चातकेन राजातदाकर्ण्यधिग्जीवितंयद्विद्वांसः
कवयश्चद्वारमागत्यसीदंतीति तस्मैविप्रायसर्वा
ण्याभरणान्युत्तार्यददौ ततोराजाकोशाधिकारिण

माहूयाह भांडारिक मुंजराजस्यतथामेपूर्वेषांच येकोशास्संति तेषांमध्येरत्नपूर्णान्कलशानाह ततः काश्मीरदेशान्मुचुकुंदकविरागत्यस्वस्तीत्युक्त्वाप्राह श्लोकः त्वद्यशोजलधौभोजनिमज्जनभयादिवसूर्येंदुबिंबमिषतोधत्तेकुंभद्वयंनभः राजातस्मै प्रत्यक्षरंलक्षंददौ पुनःकविराह श्लोकः आसन्नृक्षणानियावंतिचातकाश्रूणितेंबुदे तावंतोपित्वयोदारनमुक्ताजलबिंदवः ततस्सराजातस्मैशततुरगानपिददौ ततःभांडारिकोलिखति श्लोकः मुचुकुंदायकवयेजात्यानश्वानूशतंददौ भोजःप्रदत्तलक्षोपितेनासोयाचितःपुनः ततोराजासर्वानपिवेश्मप्रेषयित्वांतर्गच्छति ततोराज्ञश्चामरग्राहिणीप्राह श्लोकः राजन्मुंजकुलप्रदीपसकलक्ष्मापालचूडामणेयुक्तंसंचरणंतवाद्भुतमणिच्छत्रेणरात्रावपि माभूत्तद्वदनावलोकनवशाद्व्रीडाभिनम्रःशशीमाभूच्चेयमरुंधतीभगवतीदुश्शीलताभाजनं राजातस्यैप्रत्यक्षरंलक्षंददौ अन्यदाकुंडिननगराद्गोपालोनामकविरागत्य स्वस्तिपूर्वकंप्राह त्वच्चित्तेभोजनिर्मातंद्वयंतृणकणायते क्रोधेविरोधिनांसैन्यंप्रसादेकनकोच्चयः राजाश्रुत्वापितुष्टोनदास्यति राजपुरुषैःसहचर्चांकुर्वाणस्तिष्ठति ततःकविःव्यचिंतयत् किमुराज्ञोनाश्रावि ततःक्षणेनसमुंनतमेवावलोक्यराजानंकविराह श्लोकः हेपार्थोदयधोन्नतेहिभवताद्दिग्व्यावृतासर्वतो मन्येधीरतथाकरिष्यसिख

लक्षीराब्धितुल्यं सरः किंत्वेषक्षमतेनहिक्षणमपिग्री
ष्मोष्मणाव्याकुलः पाठीनादिगणस्त्वदेकशरणस्त्वद्धर्ष
तावत्कियत् राजाकविहृदयं विज्ञायगोपालकवेदा
रिद्र्याग्निनानितांतं दग्धोसीतिवदन्षोडशमणीनन
र्घ्यान्षोडशदंतीद्रांश्चददौ एकदाराजाधारानगरे
विचरन्क्वचिच्छिवालये प्रसुप्तंपुरुषद्वयमपश्यत्
तयोरेकोविगतनिद्रोवक्ति अहोत्वंममास्तरासन्न ए
व कस्त्वंप्रसुप्तोसि जागर्षिनोवा ततस्त्वपरआह
विप्रप्रणतोस्मि अहमपिब्राह्मणपुत्रः त्वामत्रमध्य
मरात्रौशयानंवीक्ष्यप्रदीप्तेचप्रदीपेकमंडलूपवीता
दिभिर्ब्राह्मणंज्ञात्वाभवदास्तरासन्नएवाहंप्रसुप्तः
इदानींत्वद्गिरमाकर्ण्यप्रबुद्धोस्मि प्रथमःप्राह वत्स
यदित्वंप्रणतोसि ततोदीर्घायुर्भव वद कुतआगम्य
ते किंतेनाम अत्रचकिंकार्यं द्वितीयःप्राह विप्रभा
स्करइतिनाम पश्चिमसमुद्रतीरेप्रभासतीर्थसमी
पेवसतिर्ममतत्र भोजस्यवितरणंबहुभिः व्यावर्णि
तंततोयाचितुमहमागतः त्वंममवृद्धत्वात्तातकल्पो
सि त्वमपिवद सआह वत्सशाकल्यइतिमेनाम
मयाएकशिलानगर्याआगम्यतेभोजंप्रतिद्रविणा
शयावत्सत्वयात्तुक्रमपिदुःखंत्वयिज्ञायते कीदृशं
तद्वद ततोभास्करःप्राह तातकिंब्रवीमिदुःखं श्लो
कः क्षुत्क्षामाःशिशवःशवाइवभृशंमंदाशयाबांध
वालिप्ताजर्झरघर्घरीजतुलवैर्नोमांतथाबाधते गे
हिन्यात्रुटितांशुकंघटयितुंकृत्वासकाकुस्मितंकु

प्यंतीव्रतिवेश्मलोकगृहिणीसूचिं यथायाचिता रा
जाश्रुत्वासर्वाभरणान्युत्तार्यतस्मैदत्वाप्राह भास्कर
सीदंसतीव्रतेबालाःश्रडितिदेशंयाहि ततःशाकल्यः
प्राह अस्त्युद्धृतावसुमती दलितोरिवर्गःक्रोडीकृता
वलवताबलिराजलक्ष्मीः एकत्रजन्मनिकृतंयदनेन
यूनाजन्मत्रयेतदकरोत्पुरुषःपुराणः ततोराजा
शाकल्यायलक्षत्रयंदत्तवान् अन्यदाराजामृगया
रसेनविचरन्तत्रपुरस्समागतहरिण्यांबाणेनवि
द्धायामपिवित्ताशयाकोपिकविराह श्रीभोजेमृग
यांगतेपिसहसाचापेसमारोपितेप्याकर्णांतगते
पिमुष्टिगलितेबाणेगलग्नेपिच स्थानान्नैवपला
यितंनचलितंनोत्कंपितंनोत्प्लुतं मृग्यामद्दशंक
रोतिदयितंकामोयमित्याशया राजातस्मैलक्षत्र
यंप्रयच्छति अन्यदासिंहासनमलंकुर्वाणेश्री
भोजनृपतौद्वारपालआगत्यआह देवजान्हवीती
रवासिनीकाचनवृद्धब्राह्मणीविदुषीद्वारितिष्ठति
राजा प्रवेशय ततआगच्छंतींराजाप्रणमति सातं
चिरंजीवेत्युक्त्वाह श्लोकः भोजप्रतापाग्निरपूर्व
एषजागर्तिभूभृत्कटकस्थलीषु यस्मिन्प्रविष्टेरि
पुपार्थिवानांतृणानिरोहंतिगृहांगणेषु राजातस्यै
रत्नपूर्णकलशंप्रयच्छति ततोलिखतिभांडारिकः
भोजेनकलशोदत्तस्सुवर्णमणिसंभृतः प्रतापस्तु
तितुष्टेनवृद्धायैराजसंसदि अन्यदादूरदेशादाग
तःकश्चिच्चोरोराजानंप्राह देवसिंहलदेशेमया

काचनवामुंडालयेराजकन्यादृष्टा साचमांदृष्ट्वामालवदेशदेवस्यमहिमानंबहुधाश्रुतंत्वमपिवदेतिपप्रच्छ मयाचतस्यादेवगुणाआवर्णिताः साचात्यंततोषाच्चंदन तरोनिरूपमंगर्भखंडंदत्वायथास्थानंप्रपेदे देवगुणाभिवर्णनप्राप्तंतदेतद्गृहाण एतत्प्रसृतपरिमलभरणेभृंगाभुजंगाश्चसमायांति राजातद्गृहीत्वातुष्टस्तस्मैलक्षंदत्तवान् ततोदामोदरकविस्तन्निषेणराजानंस्तौति श्लोकः श्रीमच्चंदनवृक्षसंतिबहवस्तेशाखिनःकाननेयेषांसौरभमात्रकंनिवसतिप्रायेणपुष्पश्रिया प्रत्यंगंसुकृतेनतेनशुचिनाख्यातःप्रसिद्धात्मना योसौगंधगुणस्त्वयाप्रकटितःक्वासाविहप्रेक्ष्यते राजास्वस्तुतिंबुध्वालक्षंददौ ततोद्वारपालआगत्यप्राह देवकाचित्सूत्रधारीस्त्रीद्वारिवर्तते राजाप्रवेशय ततस्सागत्यराजानंप्रणिपत्याह श्लोकः बलिःपातालनिलयोधःकृतश्चित्रमत्रकिं अधःकृतोदिवस्थोपिचित्रंकल्पद्रुमस्त्वया राजातस्यैप्रत्यक्षरंलक्षंददौ ततःकदाचिन्मृगयापरिश्रांतःराजाक्वचित्सहकारतरोरधस्तात्तिष्ठति स्मतत्रमल्लिनाथाख्यकविरागत्याह श्लोकः शाखाशतशतविततास्संतिकियंतोनकाननेतरवः परिमलभरमिलदलिकुलदलितदलाःशाखिनोविरलाः ततोराजातस्मैहस्तवलयंददौ तत्रैवआसीनेराज्ञिकोपिवि

ह्वानागत्यस्वस्तीत्युक्त्वामाह राजन्काशीदेशमा रभ्यतीर्थयात्रायपरिभ्रामते क्षीणदेशवासिनाम या राजाप्याह शांतीर्थवासिनां दर्शनात्कृतार्थोस्मि सआह वयंमांत्रिकाश्च राजा विप्रेषुसर्वेसंभा व्यते राजापुनःप्राह विप्रमंत्रविद्यायाययथापरलो केफलप्राप्तिः तथाकिमिहलोकेप्यस्तिविप्रःरा जन्सरस्वतीचरणाराधनाद्विद्यावाप्तिर्विश्वावि दिता परंधनावाप्तिर्भाग्याधीना श्लोकः गुणाः खलुगुणाएवनगुणाभूतिहेतवः धनसंचयकर्त्रृ णिभाग्यानिपृथगेवहि देवविद्यागुणाएवलोका नांप्रतिष्ठार्थेभवंति नतुकेवलंसंपदः श्लोकः देव आत्मायत्तेगुणग्रामेनैर्गुण्यंवचनीयता दैवायत्तेषुवित्तेषुपुंसांकानामवाच्यता देवमंत्रा राधनेनाप्रतिहताशक्तिःस्यात् देव एवंकुतूह लंयस्यमंत्रायस्यशिरसिकरोनिधीयतेससरस्व तीप्रसादेनअस्खलितविद्याप्रसारःस्यात् राजा प्राह सुमतेमहतीदेवताशक्तिः ततोराजाकाम पिदासीमाकार्यविप्रंप्राह द्विजवरअस्यावेश्या याःशिरसिकरंनिधेहि विप्रस्तस्याःशिरसिकरं निधायतांप्राह देवियद्राजाज्ञापयतितद्वद ततो दासीप्राह देवाहमद्यसमस्तवाङ्मयजातंहस्ता मलकवत्पश्यामि देवादिशकिंवर्णयामि ततो राजापुरःखड्गंवीक्ष्यप्राह खड्गमेव्यावर्णयेतिदा सीप्राह श्लोकः धाराधरस्त्वदसिरेषनरेंद्र चित्रं

वर्षंतिवैरिवनिताजनलोचनानि कोशेनसंततम
संगतिराइवेस्यदारिद्र्यमभ्युदयतिप्रतिपार्थिवानां
राजातस्मैरत्नकलशाननर्घ्यान्पंचददौ ततस्त
स्मिन्क्षणेकुतश्चित्पंचकवयःसमाजग्मुः तान
वलोक्य ईषद्धिच्छायमुखंराजानं दृष्ट्वामहेश्वरक
विःवृक्षमिषेणाह श्लोकः किंजातोसिचतुष्पथेघ
नतरच्छायोसिकिंच्छायया छन्नश्चेत्फलितोसि
किंफलभरैःपूर्णोसिकिंसन्नतः हेसद्वृक्षसहस्वसंप्र
तिचिरंशाखाशिखाकर्षणक्षोभामोटनभंजनानि
जनतस्वैरेवदुश्चेष्टितैः ततोराजातस्मैलक्षंददौ
ततस्तेद्विजवराः पृथक्पृथगाशीर्वचनमुदीर्यय
थाक्रमंराजाज्ञयाकंबलउपविश्यमंगलंचक्रुः
ततःएकःपठति श्लोकः कूर्मःपातालगंगापयसि
विहरतांतत्तटीरूढमुस्तामादत्तामादिपोत्रीशिथि
लयतुफणामंडलंकुंडलींद्रः दिङ्नागास्तंगामृणाली
कवलनकलनांकुर्वतांपर्वतेंद्राः सर्वेस्वैरंचरंतु
त्वयिवहतिविभोभोजदेवींधरित्रीं राजाचमत्कृ
तः तस्मैशताश्वान्ददौ ततोभांडारिकोलिखति
क्रीडोद्यानेनरेंद्रेणशतमश्वामनोजवाः प्रदत्ताःका
मदेवायसहकारतरोरधः ततःकदाचिद्भोजोविचा
रयतिस्ममत्सदृशोवदान्यःकोपिनास्तीति तदूवं
विदित्वामुख्यामात्यो विक्रमार्कस्यपुण्यपत्रंभोजा
यप्रदर्शयामास भोजस्तत्रपत्रेकिंचित्प्रस्तावमप
श्यत् तथाहिविक्रमार्कः पिपासयाप्राह स्वच्छं

सज्जनचित्तवल्लघुतरंदीनार्ति वच्छीतलंपुत्रालिं
गनवत्तथैवमधुरंतद्धाल्यसंजल्पवत् एलोशीरलवं
गचंदनलसत्कर्पूरकस्तूरिकाजातीपाटलिकेतकैः
सुरभितंपानीयमानीयतां ततोमागधःप्राह वत्साभो
जंसरस्वत्यभिवसतिसदाभ्योणएवाधरस्तेबाहुःका
कुत्स्थवीर्यस्मृतिकारणपटुर्दक्षिणस्तेसमुद्रः वाहि
न्यःपार्श्वमेताःकथमपिभवतोनैवमुंचत्यभीक्ष्णंस्व
च्छेचित्तेकुतोभूत् कथयनरपतेतेंबुपानाभिलाषः
ततोविक्रमार्कःप्राह तथाहि अष्टौहाटककोटय
स्त्रिनवतिर्मुक्ताफलानांतुलाः पंचाशन्मधुगंधमत्त
मधुपाःक्रोधोद्धताःसिंधुराः अश्वानामयुतंप्रपंच
चतुरंवारांगनानांशतंदत्तंपांड्यनृपेणयौतकमिदं
वैतालिकायार्प्यतां ततोभोजःप्रथमतएवअद्भुतं
विक्रमार्कचरित्रंदृष्ट्वानिजगर्वतत्याज ततःकदाचि
द्धारानगरेरात्रौविचरन्राजा कंचनदेवालयेशीता
र्त्तंब्राह्मणमित्थंपठंतमवलोक्यस्थितः शीतेना
ध्युषितस्यमाघजलवच्चिंतार्णवेमज्जतश्शांताग्नेः
स्फुरिताधरस्वधमतःक्षुत्क्षामकुक्षेर्मम निद्राक्वा
प्यवमानितेवदयितासंत्यज्यदूरंगता सत्पात्रप्रति
पादितेवकमलानोहीयतेशर्वरी इतिश्रुत्वाराजा
प्रातस्तमाहूयपप्रच्छ विप्रपूर्वेद्युःरात्रौत्वयादारु
णःशीतभारःकथंसोढः विप्रआह रात्रौजानुर्दि
वाभानुःकृशानुःसंध्ययोर्द्वयोः एवंशीतंमयानी
तंजानुभानुकृशानुभिः राजातस्मैसुवर्णकलश

त्वयंप्रादात् ततःकविःराजानंस्तौति धारयित्वात्व
यात्मानंमहात्यागधनाधुना मोचितावृलिकर्णाज्ञा:
स्वयशोगुप्तकर्मणः राजातस्मैलक्षंददौ एकदा
क्रीडोद्यानपालआगत्य एकमिक्षुदंडंराज्ञःपुरोमु
मोच तंराजाकरेगृहीतवान् ततोमयूरकविः नि
तांतंपरिचयवशात् आत्मनिराज्ञाकृतमवज्ञांम
नसिनिधाय इक्षुमिषेणाह कांतोसिनित्यमधुरो
सिरसाकुलोसिकिंचासिवंचशरकार्मुकमद्वितीयं इ
क्षोतवास्तिसकलंपरमेकमूनंयत्सेवितोभजसिनी
रसतांक्रमेण राजाकविहृदयंज्ञात्वामयूरंसंमानित
वान् ततःकदाचिद्राजौसौधोपरिक्रीडापरोराजाशशां
कमालोक्यप्राह श्लोकः यदेतच्चंद्रांतर्जलदलवली
लांवितनुते तदाचष्टेलोकःशशकइतिनोमांप्रतित
था ततश्चाधोभूमौसौधांतरःप्रविष्टःकश्चिच्चौरआ
ह श्लोकः अहंत्विंदुंमन्येत्वदरिविरहाक्रांततरुणीक
टाक्षोल्कापातव्रणकणकलंकांकिततनुं राजातत्
श्रुत्वाप्राह अहोमहाभागकस्त्वमर्धरात्रेकोशगृह
मध्येतिष्ठसीतिसआह देवअभयंनोदेहीतिराजातथे
ति ततोराजानंसचौरःप्रणम्यस्ववृत्तांतमकथयत्
तुष्टोराजाचौरायदशकोटिःसुवर्णस्याष्टौमत्तान्गजेंद्रां
श्चददौ ततःकोशाधिकारीधर्मपत्रेलिखति श्लोकः

तदस्मैचौरायप्रतिनिहतमृत्युप्रतिभियेप्रभुःप्रीतः
प्रादादुपरितनपादद्वयकृते सुवर्णानांकोटीर्दशद
शनकोटिक्षतगिरीन् गजेंद्रानप्यष्टौमदमुदितकूज

न्मधुलिहः ततः कदाचित् द्वारपाल आगत्य प्राह देव कौपीनावशेषो विद्वान् द्वारि वर्तत इति राजा प्रवेशये-ति ततः प्रविष्टस्स कविर्भोजमालोक्य अद्य मे दारि-द्र्यनाशो भविष्यतीति मत्वा तुष्टो हर्षाश्रूणि मुमोच राजा तमालोक्य प्राह कवे किं रोदिषीति ततः कविराह रा-जन् आकर्णय मद्गृहस्थितिं श्लोकः अये लाजा उच्चैः पथि वचनमाकर्ण्य गृहिणी शिशोः कर्णौ यत्नात् सुपि-हितवती दीनवदना मयि क्षीणोपाये यदकृत दृशाव-श्रुबहुले तदन्तः शल्यं मे त्वमसि पुनरुद्धर्तुमुचितः रा-जा शिव शिव कृष्ण कृष्णेत्युदीरयन् प्रत्यक्षरलक्षं दत्त्वा प्राह सुकवे त्वरितं गच्छ गेहं त्वद्गृहिणी खिन्ना भू-दिति ततः कदाचिन्मृगयापरिश्रान्तो राजा कस्यचि-न्महावृक्षस्य छायामाश्रित्य तिष्ठति स्म तत्र शोभव-देवो नाम कविः कश्चिदागत्य राजानं वृक्षमिषेणाह श्लोकः आमोदैर्मरुतो मृगाः किसलयोल्लासैस्त्वचा तापसाः पुष्पैः षट्चरणाः फलैः शकुनयो घर्मार्दिता-श्छायया स्कन्धैर्गन्धगजास्त्वयैव विहिताः सर्वे कृता-र्थास्ततस्त्वं विश्वोपकृतिक्षमोसि भवता भग्नापरे-न्ये द्रुमाः किंच श्लोकः अविदितगुणापि सत्कवि-भणितिः कर्णेषु वमति मधुधारां अनधिगतपरिम-लापि च हरति दृशं मालतीमाला ताभ्यां श्लोकाभ्यां चमत्कृतो राजा प्रत्यक्षरं लक्षं ददौ अन्यदा श्रीभोजः श्रीमहेश्वरं नन्तुं शिवालयमभ्यगात् तदा कोपि ब्रा-ह्मणो राजानं शिवसन्निधौ प्राह देव श्लोकः अर्धं

य

दानववैरिणा गिरिजयाप्यर्धे शिवस्याहृतं देवेत्यज
गतीतले पुरहराभावे समुन्मीलति गंगा सागरमंबरं
शशिकला नागाधिपः क्ष्मातलं सर्वज्ञत्वमधीश्वरत्वम
गमत्त्वां मां तु भिक्षाटनं राजा अक्षरलक्षं ददौ ततः क
दाचिद्द्वारपाल आगत्य प्राह देव कोपि विद्वान्द्वारि
तिष्ठतीति राजा प्रवेशयेति ततः प्रविष्टो विद्वान्
पठति श्लोकः क्षणमप्यनुगृह्णाति यं दृष्टिस्ते तुरा
गिणी ईर्ष्ययेव त्यजत्याशु तं तरेंद्र दरिद्रता राजा ल
क्षं ददौ पुनरपि पठति कविः केचिन्मूलाकुलाशाः
कतिचिदपि पुनः स्कंधसंबंधभाजः छायां केचित्प्र
पन्नाः प्रपदमपि परे पल्लवान्नुन्नयंति अन्ये पुष्पाणि
पाणौ दधति तदपरे गंधमात्रस्य पात्रं वाग्वल्याः किं
तु मूढाः फलमहह न हि द्रष्टुमप्युत्सहंते एतदाकर्ण्य
बाणः प्राह परिच्छिन्नस्वादोमृतगुडमधुक्षौद्रपय
सां कदाचिच्चाभ्यासाद्भजति ननु वैरस्यमधिकं प्रिया
बिंबोष्ठे वा रुचिरकविवाक्येप्यनवधिर्नवानंदः कोपि
स्फुरति तु रसोसौ निरुपमः ततो राजा लक्षं दत्तवान्
ततः कदाचित्सिंहासनमलंकुर्वाणे श्रीभोजे द्वार
पाल आगत्य प्राह देव वाराणसीदेशादागतः कोपि भव
भूतिर्नाम कविः द्वारि तिष्ठतीति राजा प्राह प्रवेश
येति ततः प्रविष्टः सोपि सभामगात् ततः सभ्याः सर्वे
तदागमनेन तुष्टा अभवन् राजा च भवभूतिं प्रेक्ष्य प्र
णमति स्म स च स्वस्तीत्युक्त्वा तदाज्ञयोपविष्टः भवभू
तिः प्राह देव नानीयंते मधुनि मधुपाः पारिजातप्रसू

नैःनाभ्यर्थ्यंतेतुहिनरुचिनश्चंद्रिकायांचकोराः अ
स्मद्वाग्माधुरिमधुरमापद्यपूर्वावताराःसोल्लासाःस्यु
स्स्वयमिह बुधाःकिंमुधाभ्यर्थनाभिः नास्माकंशि
विकानकाधिकटकाद्यालंक्रियासत्क्रियानोत्तुंगस्तु
रगोनकश्चिदनुगोनैवांबरंसुंदरंकिंतुक्ष्मातलवर्त्य
शेषविदुषांसाहित्यविद्याजुषांचेतस्तोषकरीशिरोन
तिकरीविद्यानवद्यास्तिनः इत्याकर्ण्यबाणःपंडितपुत्रः
प्राह आःपापधराधीशसभायामहंकारंमाकृथाः श्लो
कः निश्वासोपिननिर्यातिबाणेहृदयवर्त्मनि किंपु
नःप्रकटाटोपपदबद्धासरस्वती ततोभवभूतिःपराभ
वमसहमानःप्राह इटादाकृष्टानांकतिपयपदानांर
चयिताजनस्सधोलुश्चेदहहकविनावश्यवचसा
भवेद्द्यश्वोवाकिमिहबहुनापापिनिकलौघटानांनि
र्मातुस्त्रिभुवनविधातुश्चकलहः पुनराह कालिदा
सकवेर्वाणीकदाचिन्मद्गिरासह कलयस्यघसाम्यं
चेद्भीताभीतापदेपदे ततःकालिदासःप्राह सखेभव
भूतेमहाकविरसि अत्रकिमुवक्तव्यं श्लोकः एषा
धारेंद्रपरिषन्महापंडितपंडिता आवयोरंतरंवेत्ति राजावा
शिवसन्निभः तच्छ्रुत्वाराजाप्राह सुधाभ्यांरसंतोव
र्णनीयइति भवभूतिःमुक्ताभूषणमिंदुबिंबमज
नि व्याकीर्णतारंनभःस्मारंचापमपेतचापलमभू
दिंदीवरेमुद्रिते व्यालीनंकलकंठमंदरणितंमंदानि
लेमंदितंनिष्पंदस्तवकाचचंपकलतासाधून्नजानेत
नः ततःकालिदासःप्राह च्छिन्नंमंडलमैंदवंविलुलि

तस्त्रग्भार नष्टं तमःप्रागेवप्रथमानकैतकशिखालीलायितंसुस्मितं शांतंकुंडलतांडवंकुवलयद्वंद्वंतिरोमीलितंवीतंविद्रुमसीत्कृतंनहितता जानेकिमासीदिति राजाकालिदासंप्राह सुकवेभवभूतिनासहसाम्यंतवनवक्तव्यं भवभूतिराह देवकिमितिवारयसिराजा सर्वप्रकारेणकविरसि ततोबाणःप्राह राजन्भवभूतिकविश्चेत्कालिदासोवक्तव्यो वा राजा बाणकवेकालिदासःकविर्नकिंतुपार्वत्याःकश्चिद्द्वनौपुरुषावतारएव ततोभवभूतिराह देवकिमत्रप्राशस्त्यंभाति राजाप्राह भवभूतेकिमुवक्तव्यंप्राशस्त्यं कालिदासश्लोकेयतःकैतकशिखालीलायितंसुस्मितमितिपठितं ततोभवभूतिराह देवपक्षपातेनवदसीति ततःकालिदासःप्राह देवअपख्यातिर्माभूत्भुवनेश्वरीदेवतालयंगत्वातत्सन्निधौतांपुरस्कृत्यधरायांशोधनीयंत्वयाततोभोजःसर्वकविवृंदवेदितस्सन्भुवनेश्वरीदेवालयंप्राप्यतत्रतत्सन्निधौभवभूतिहस्तेधरांदत्वाश्लोकद्वयंचतुल्यपत्रद्वयेलिखित्वातुलायांमुमोच ततोभवभूतिभागेलघुत्वोद्धृतांईषदुन्नतिंज्ञात्वादेवीभक्तपराधीनासदसितत्परिभवोमाभूदित्वावतंसकल्हारमकरंदंवामकरनखाग्रेणगृहीत्वाभवभूतिपत्रेचिक्षेप ततःकालिदासःप्राह अहोमेसौभाग्यंममचभवभूतेश्चफणितंधरायामारोप्यप्रतिफलतितस्यांलघिमनि गिरांदेवीसद्यःश्रुति

कलितकल्हारकलिकामधूलीमाधुर्यंक्षिपतिपरिपू
र्यै भगवती ततःकालिदासपादयोःपततिभवभूतिः
राजानंचविशेष इमनुतेस्मततोराजाभवभूतिकव
येशतमत्तगजानूददौ अन्यदाराजाधारानगरेरात्रा
वेकाकीविचरन्कांचनस्वैरिणींसंकेतंगच्छंतींदृष्ट्वा
पप्रच्छ देविकालमेकाकिनीमध्यरात्रौक्कगच्छसी
ति ततश्चतुरास्वैरिणीसातंरात्रौविचरंतंश्रीभोजंनि
श्चित्यप्राह श्लोकः त्वत्तोपिविषमोराजन्विषमेषु
क्षमापते शासनंयस्यरुद्राद्या दासवन्मूर्ध्निकुर्व
ते ततस्तुष्टोराजादोर्दंडाद्दायअंगदंवलयंचतस्यै
दत्तवान् साचयथास्थानंप्राप ततोवर्त्मनिगच्छन्
क्वचिद्गृहेएकाकिनींरुदंतींनारींदृष्ट्वाकिमर्थमर्धरा
त्रौरोदितिकिंदुःखमेतस्याइतिविचारयितुमेकमंग
रक्षकंप्राहिणोत् ततोंगरक्षकःपुनरागत्यप्राह दे
वमयापृष्टंयदाहतच्छृणु वृद्धोमत्पतिरेषमंचक
गतः स्थूणावशेषंगृहंकालोयंजलदागमःकुशलि
नीवत्सस्यवार्तापिनो यत्नात्संचिततैलबिंदुघटका
भग्नेतिपर्याकुलादृष्ट्वागर्भभरालसांनिजवधूंश्वश्रू
श्चिरंरोदिति ततःकृपावारिधिःक्षोणीपालःतस्यैल
क्षंददौ अन्यदाकोंकणदेशवासीविप्रःराज्ञेस्वस्ती
त्युक्त्वाप्राह श्लोकः शुक्तिद्वयपुटेभोजयशोब्धौत
वरोदसी मन्येतदुद्भवंमुक्ताफलंशीतांशुमंडलं रा
जातस्मैलक्षंददौ अन्यदाकाश्मीरदेशात्कोपि
कौपीनावशेषोराजनिकटमागत्यकवीन्कनकमाणि

क्यपट्टदुकूलालंकृतान् आलोक्य राजानंप्राह नो पाणीवरकंकणक्वणयतो नोकर्णयोःकुंडले क्षुभ्यत्क्षीरधिदुग्धमुग्धमहसी नोवाससीभूषणं दंतस्तं भविकासिकानशिबिकानाश्वोपिविश्वोन्नतोराजन्राजसभासुभाषितकलाकौशल्यमेवास्तिनः ततस्तस्मैराजालक्षंददौ अन्यदाराजारात्रौचंद्रमंडलंदृष्ट्वा तदंतस्थकलंकंवर्णयतिस्म अंकंकेपिशशंकिरे जलनिधेःपंकंपरेमेनिरेसारंगंकतिचिच्चसंजगदिरेभूच्छायमैच्छन्परे इतिराजापूर्वार्धंलिखित्वाकालिदासहस्तेददौ ततस्सतस्मिन्नेवक्षणे उत्तरार्धंलिखतिकविः इंदौयद्दलितेंद्रनीलशकलश्यामंदरीदृश्यतेतत्सांद्रंनिशिपीतमंधतमसंकुक्षिस्थमाचक्ष्महे राजाप्रत्यक्षरलक्षमुत्तरार्धस्यदत्तवान् ततःराजाकालिदासकवितापद्धतिंवीक्ष्य चमत्कृतःपुनराह सखेअकलंकंचेइमसंव्यावर्णयेति ततःकविःपठति लक्ष्मीक्रीडातडागो तिधवलगृहंदर्पणोदिग्वधूनां पुष्पंश्यामालताया स्त्रिभुवनजयिनोमन्मथस्यातपत्रं पिंडीभूतंहरस्यस्मितममरधुनीपुंडरीकंमृगांकोज्योत्स्नापीयूषवापी जयतिसितवृषस्तारकागोलकस्य राजापुनःप्रत्यक्षरलक्षंददौ एकदाकश्चिद्दूरदेशादागतःवीणाकविराह तर्कव्याकरणाध्वनीनधिषणोनाहंनसाहित्यवित्नोजानामिविचित्रवाक्यरचनाचातुर्यमत्यद्भुतं देवीकापिविरंचिवल्लभसुतापाणिस्थवीणा

कलङ्कादाभिन्नत्वं तथापि किमपि ब्रूते मुखस्यामम राजा तस्मै लक्षं ददौ बाणः तस्य सुललितप्रबंधं श्रुत्वाप्राह देव मातंगीमिव माधुरीं ध्वनिविदो नैव स्पृशंत्सुत्तमांव्युत्पत्तिं कुलकन्यकामिवरसोन्मज्ञातपश्यंत्यमी कस्तूरीघनसारसौरभसुहृद्युत्पत्तिमाधुर्ययोर्योगः कर्णरसायनं सुकृतिनः कस्यापिसंपद्यते अन्यदा राजा सीतां प्रातःप्राह देविप्रभातं व्यावर्णयेति सीताप्राह विरलविरलास्थूलास्तारा कलाविवसज्जना मनइवमुनेः सर्वत्रैवप्रसन्नमभून्नभः अपसरतिच ध्वांतं चित्तात्सतामिवदुर्जनः व्रजतिचनिशाक्षिप्रं लक्ष्मीनिरुद्यमनाइव राजालक्षं दत्वा कालिदासंप्राह सखेसुकवेत्वमपिप्रभातं व्यावर्णयेति कालिदासः अभूत्प्राचीपिंगारसपतिरिवप्राश्यकनकंगतच्छायश्चंद्रोबुधजनइवग्राम्यसदसि क्षणात्क्षीणास्तारानृपतयइवानुद्यमपरानदीपाराजंते विनयरहितानामिवगुणाः राजा तस्मै प्रत्यक्षरलक्षं ददौ अन्यदाद्वारपालआगत्यप्राह देवकापिमालाकारपत्नीद्वारितिष्ठतीतिराजाप्रवेशयेति ततःप्रवेशितासाचनमस्कृत्यपठतिसमुन्नतघनस्तनस्तबकचुंबितुंबीफलक्वणन्मधुरवीणया विबुधलोकलोलभ्रुवा त्वदीयमुपगीयते हरकिरीटकोटिस्फुरत्तुषारकरकंदलीकिरणपूरगौरं यशः राजा अहो महती पदपद्धतिरिति तस्याःप्रत्यक्षरलक्षं ददौ अन्यदा रात्रौ राजा धारानगरे विचरन्

कस्यचिद्गृहे कामपिकामिनी मुसलखण्डपरायणां दृष्ट्वा राजा तां तरुणीं पूर्णचंद्राननां सुकुमारांगीं विलोक्य तत्करस्थं मुसलं प्राह हे मुसल त्वं तस्याः करपल्लवस्पर्शेनापि त्वयि किसलयं नासीत् तर्हि सर्वथा काष्ठमेव त्वमिति ततो राजा एकं चरणं पठति स्म श्लोकः मुसल किसलयं ते तत्क्षणाद्यन्न जातं ततो राजाग्रातस्स भार्यां समागतं कालिदासं वीक्ष्य मुसल किसलयं ते तत्क्षणाद्यन्न जातं इति पठित्वा सुकवेलं चरणत्रयं पठेत्युवाच ततः कालिदासः प्राह जगति विदितमेतत्काष्ठमेवासि नूनं तदपि च किल सत्संकाननेवर्धितोसि नवकुवलयनेत्री पाणिसंगोत्सवेस्मिन्मुसल किसलयं ते तत्क्षणाद्यन्न जातं ततः राजा चरणत्रयस्य प्रत्यक्षरं लक्षं ददौ अन्यदा राजा दीर्घकालं जलकेलीं विधाय परिश्रांतस्तत्तीरस्थवटविटपिच्छायायां निषण्णः तत्र कश्चित्कविरागत्य प्राह श्लोकः छन्नं सैन्यरजोभरेण भवतः श्रीभोजदेवक्षमारक्षादक्षिणदक्षिणक्षितिपतिः प्रेक्ष्यांतरिक्षं क्षणात् निःशंको निरपत्रपो निरनुगो निर्बांधवो निःसुहृन्निस्त्रीको निरपत्यको निरनुजो निर्हाटको निर्गतः किंच श्लोकः अकांडधृतमानसव्यवसितोत्सवेस्सारसैरकांडपटुतांडवैरपि शिखंडिनां मंडलैः दिशस्समवलोकिताः सरसनिर्भरप्रोल्लसत् भवत्पृथुवरूथिनीरजनिभूरजश्यामलाः ततो राजा लक्षद्वयं ददौ त

दानीमेवतस्यशाखायामेकंकाकंरटंतं प्रेक्ष्यकोकि
लं चान्यशाखायांकूजंतंवीक्ष्य देवजयनामाकवि
राह श्लोकः नोचारूचरणौनचापिचतुराचंचूर्न
वाच्यंवचोनोलीलाचतुरागतिर्नचशुचिःपक्षग्रहो
यंतव क्रूरक्रेंकृतिनिर्भरांगिरमिहस्थानेवृथैवो
द्गिरन्मूर्खध्वांक्षनलज्जसेप्यसदृशंपांडित्यमुन्ना
टयन् ततः एनांदेवजयकविनाकाकमिषेणवि
रचितांस्वगर्हणांमन्यमानस्तत्स्पर्धालुःहरिशर्मा
नामकविः कोपेनेर्ष्यापूर्वंप्राह श्लोकः तुल्यवर्णच्छ
दः कृष्णःकोकिलैस्सहसंगतः केनवाख्यायतेका
कःस्वयंयदिनभाषते ततोराजातयोःहरिशर्मदेव
जययोःअन्योन्यवैरंज्ञात्वामिथआलिंगना दि
वस्त्रालंकारादिदानेनचमित्रत्वंव्यधात् अन्यदारा
जायानमारुह्यगच्छन्वर्त्मनिकंचित्तपोनिधिंदृ
ष्ट्वातमाह भवादृशानांदर्शनंभाग्यायत्तंभवतांक्व
स्थितिः भोजनार्थंकेवाप्रार्थ्यतइति ततःसराज
वचनमाकर्ण्यतपोनिधिःआह श्लोकः फलंस्वे
च्छालभ्यंप्रतिवनमखेदंक्षितिरुहांपयःस्थानेस्था
नेशिशिरमधुरंपुण्यसरितां मृदुस्पर्शाशय्यासुल
लितलतापल्लवमयीसहंतेसंतापंतदपिधनिनांद्वा
रिकृपणाः राजन्वयंकमपिनाभ्यर्थयामः नगृह्णी
मश्चेतिराजातुष्टोनमति ततउत्तरदेशादागत्यक
श्चिद्राजानंस्वस्तीत्याह तंचराजापृच्छति विद्वन्कु
त्रतेस्थितिरिति विद्वानाह श्लोकः यत्रांबुनिर्यत्

मृतं भंस्य जाश्च सुरेश्वराः चिंतामणिश्च पाषाणा स्तत्रनोवसतिः प्रभो तदा राजा लक्षं दत्त्वा प्राह काशीदेशे काविशेषवार्तेति सभाह देव इदानीं काचिदद्भुतवार्ता तत्र लोकमुखेन श्रुता देवादुःखेन दीना इति राजा देवानां कुतो दुःखविद्वन् सचाह निवासः काष्ठं नो दत्तो भोजेन कनकाचलः इतिव्यत्र पियो देवा भोजवार्तेति नूतना ततो राजा कुतूहलोत्थः तुष्टस्सन् तस्मै पुनः लक्षं ददौ ततो द्वारपालः प्राह देव श्रीशैलादागतः कश्चिद्विद्वान् ब्रह्मचर्यनिष्ठः द्वारिवर्तत इति राजा प्रवेशयेत्याह तत आगत्य ब्रह्मचारी चिरंजीवेति वदति राजा तं पृच्छति ब्रह्मन् बाल्य एव कलिकाला ननुरूपं किंनाम व्रतं ते अन्वहमुपवासेन कृशोसि कस्यचित् ब्राह्मणस्य कन्यां तुभ्यं दापयिष्यामि त्वं चेद् गृहस्थधर्ममंगीकरिष्यसीति ब्रह्मचारी प्राह देव त्वमीश्वरस्त्वया किमसाध्यं श्लोकः सारंगाः सुहृदो गृहं गिरिगुहा शांतिः प्रिया गेहिनी वृत्तिर्वन्यलताफलैर्निवसनं श्रेष्ठं तरूणां त्वचः त्वद्ध्याना मृतपूरमग्नमनसां येषामियं निर्वृतिः स्तेषामिंदुकलाव्रतं संयमिनां मोक्षेपि नो नस्पृहा राजा उत्थाय पादयोः पतति आह च ब्रह्मन् मया किं कर्त्तव्यमिति स आह देव वयं काशीं जिगमिषवः तत एकं विधेहि ये त्वत्सदने पंडितवराः तान् सर्वानपि सपत्नीकान् काशीं प्रति प्रेषय ततोहं गोष्ठीतृप्तः काशीं गमिष्यामीति राजा तथा चक्रे ततस्सर्वे पंडितवरास्त

दाज्ञया प्रस्थिताः कालिदास एको न गच्छति स्म तदा
राजा कालिदासं प्राह सुकवे त्वं कुतो न गतोसीति ततः
कालिदासो राजानं प्राह देव सर्वज्ञोसि ते यांति तीर्थे
षु बुधा ये शंभोर्दूरवर्त्तिनः यस्य गौरीश्वरश्चित्ते तीर्थं
भोजपरं हि सः ततो विद्वत्सु काशीं गतेषु राजा कदा
चित्सभायां कालिदासं पृच्छति स्म कालिदास अद्य
किमपि श्रुतं किं त्वयेति स आह मेरौ मंदरकंदरासु
हिमवत्सानौ महेंद्राचले कैलासस्य शिलातलेषु मल
यप्राग्भारभागेष्वपि सह्याद्राविपि तेषु तेषु बहुशो भो
ज श्रुतं ते मया लोकालोकविचारचारणगणैरुद्गीय
मानं यशः ततश्चमत्कृतो राजा प्रत्यक्षरलक्षं ददौ
ततः कदाचिद्राजा विद्वद्वृंदं निर्गतं कालिदासं च अन
वरतवेश्यालंपटं ज्ञात्वाप्यचिंतयत् अहह बाणम
यूरप्रभृतयो मदीयामाज्ञां व्यदधुः अयं च वेश्यालं
पटतया ममाज्ञां नाद्रियते किं कुर्मः इति ततो राजा
सावज्ञं कालिदासमपश्यत् तत आत्मनि राज्ञोवज्ञां
ज्ञात्वा कालिदासः भल्लालदेशं गत्वा तद्देशाधिनाथं
प्राप्य प्राह देव मालवेंद्रस्य भोजस्यावज्ञया त्वद्देशं प्रा
प्तोहं कालिदासनामकविरिति ततो राजा तमासने
उपवेश्य प्राह सुकवे भोजसभाया इहागतैः पंडितै
स्समुदितः शतशस्ते महिमा सुकवे त्वां सरस्वतीं व
दंति ततः किमपि पठेति ततः कालिदास आह श्लो
कः भल्लालक्षोणिपाल त्वदहितनगरे संचरंती कि
राती कीर्णान्यादाय रत्नान्युरुतरखदिरांगारशंका

कुलांगी स्निग्धाभ्रीखंडखंडं तदुपरिमुकुलीभूतने
त्राधमंतीश्वासामोदानुपातैर्मधुकरनिकरैर्धूमशं
कांबिभर्ति ततस्तस्मैप्रत्यक्षरलक्षंददौ ततःकदा
चिद्भल्लालराजाकालिदासंपप्रच्छ सुकवेएकशिला
नगरींव्यावर्णयेति ततःकविराह श्लोकः अपांग
पातैरपदेशपूर्वैरेणीदृशामेकशिलानगर्यांवीथीषु
वीथीषुविनापराधंपदेपदेशृंखलितायुवानः पुन
श्चप्रत्यक्षरलक्षंददौ पुनश्चपठतिकविः अंभोज
पत्रायतलोचनानामंभोधिदीर्घास्विहदीर्घिकासु
समागतानांकुटिलैरपांगैरनंगबाणैःप्रहतायुवानः
पुनश्चभल्लालनृपःप्रत्यक्षरलक्षंददौ एवंतत्रैव
स्थितःकालिदासः अत्रांतरेधारानगर्यांभोजंप्राप्य
द्वारपालःप्राह देवगुर्जरदेशान्माघनामापंडितव
रआगत्यनगराद्बहिरास्ते तेनचस्वपत्नीराजद्वारि
प्रेषिता राजातांप्रवेशयेत्याह ततोमाघपत्नीप्रवे
शितासाराजहस्तेपत्रंप्रायच्छत् राजातदादायवा
चयति श्लोकः कुमुदवनमपश्रिश्रीमदंभोजषं
डंत्यजतिमुदमुलूकःप्रीतिमांश्चक्रवाकः उदय
महिमरश्मिर्यातिशीतांशुरस्तंहतविधिनिहतानां
हाविचित्रोविपाकः इतिराजातदद्भुतंप्रभातवर्णन
माकर्ण्यलक्षत्रयंदत्वामाघपत्नीमाह मातरिदंभो
जनायप्रदीयते मातरहंमाघपंडितंआगत्यनमस्कृ
त्यपूर्णमनोरथंकरिष्यामीति ततःसातदादायग
च्छंतीयाचकानांमुखात्स्वभर्तुःशारदचंद्रकिरण

गोसान् गुणानुश्रुत्वा तेभ्य एव धनमखिलं भोजदत्तं दत्तवती माघपंडितस्वभर्तारमासाद्य प्राह नाथ रा ज्ञा भोजेनाहं बहुमानिता धनं सर्वं याचकेभ्यस्त्वद्गु णानाकर्ण्य दत्तवती माघः प्राह देवि साधु कृतं परं मे ते याचकाः समायांति किल तेभ्यः किं देयमिति त तो माघपंडितं वस्त्रावशेषं ज्ञात्वा कोप्यर्थी प्राह श्लो कः आश्वास्य पर्वतकुलं तपनोष्णतप्तमुद्दामदाव विधुराणि च काननानि नानानदीनदशतानि च पूर यित्वा रिक्तोसि यज्जलद सैव तवोत्तमश्रीः इत्येत दाकर्ण्य माघः स्वपत्नीमाह देवि श्लोकः अर्थान संनिन च मुंच ति मां दुराशा त्यागे रतिं वहति दुर्ललि तं मनो मे याचा ह्यानवलाघवकरी स्ववधे च पापं प्राणाः स्वयं ब्रजत किं परिदेवनेन दारिद्र्यानलसंतापश्शां तस्संतोषवारिणा याचकाशाविघातांतर्दाहः के नोपशाम्यतीति ततस्तदा माघपंडितस्य तामवस्थां विलोक्य सर्वे याचकाः यथास्थानं जग्मुः एवं तेषु याचकेषु यथायथं गच्छत्सु माघः प्राह श्लोकः ब्रज त ब्रजत प्राणा अर्थिभिर्व्यर्थतां गतैः पश्चादपि च गं तव्यं क्व सोर्थः पुनरीदृशः इति विलपन् माघपंडितः परलोकमगात् ततो माघपत्नी स्वामिनं परलोकं ग तेसतिमाह श्लोकः सेवंते स्म गृहं यस्य दासवद्भू भुजस्सदा स स्वभार्यासहायोयं म्रियते माघपंडितः ततो राजा माघं विपन्नं ज्ञात्वा निजनगराद्द्विप्रशता वृतः मौनी रात्रावेव तत्रागात् ततो माघपत्नी राजानं

वीक्ष्यमाह राजन् यतः पंडितवरस्त्वद्देशं प्राप्तः परलोकम
गात् ततोस्य कृत्यशेषं सम्यगाराधनीयं भवतेति ततो
राजा माघे विपन्ने नर्मदातीरं नीत्वा यथोक्तेन विधिना
संस्कारमकरोत् तत्र च माघपत्नी वन्हौ प्रविष्टा त
योश्च पुत्रवत् सर्वं चक्रे भोजः ततो माघे दिवंगते रा
जा शोकाकुलो विशेषेण कालिदासवियोगेन च पंडि
तानां प्रवासेन कृशोभूद्दिने दिने बहुलपक्षशशीव
ततो मात्यैर्मिलित्वा चिंतितं अल्लालदेशे कालिदासो
वसति तस्मिन्नागते राजा सुखी भविष्यतीति एवं वि
चार्य मात्यैः पत्रे किमपि लिखित्वा तत्पत्रं चैकस्या
मात्यस्य हस्ते दत्त्वा प्रेषितं स कालक्रमेण कालिदास
मासाद्य राज्ञो मात्यैः प्रेषितोस्मीति नत्वा तत्पत्रं दत्तवा
न् ततस्तत्कालिदासो वाचयति श्लोकः नभवति
संभवति न चिरं भवति चिरं चेत्फले विसंवादी को
पः सत्पुरुषाणां तुल्यः स्नेहेन नीचानां सहकारे चिरं
स्थित्वा सलीलं बालकोकिल तं हित्वाद्यान्यवृक्षेषु
विचरन्न विलज्जसे कलकंठ यथा शोभा सहकारे
भवद्गिरः खदिरे वा पलाशे वा किं तथा स्याद्विचारये
ति ततः कालिदासः प्रभाते तं भूपालमापृच्छ्य माल
वदेशमागत्य राज्ञः क्रीडोद्याने तस्थौ ततो राजा च त
त्रागतं ज्ञात्वा स्वयं गत्वा महता परिवारेण तमानीय
सम्मानितवान् ततः क्रमेण विद्वन्मंडले च समाया
ते सा भोजपरिषत् मागिव रेजे ततः सिंहासनमलं
कुर्वाणं भोजं द्वारपालः आगत्य प्रणम्याह देव को

पिविद्वान् जालंधरदेशादागत्य द्वारिस्थोस्तीति राजानम
विज्ञापयामास। राजा च विद्वानागत्य सभायां तथाविधं राजा
नं जगन्मान्यान् कालिदासादीन् कविपुंगवान्वीक्ष्य व
द्धजिह्व इवाजायत सभायां किमपि तस्य मुखान्न नि
स्सरति तदा राज्ञोक्तं विद्वन् किमपि पठेति स आह
आरनालगलदाहशंकया मन्मुखादपगता सरस्वती
तेन वैरिकमलाकचग्रहव्यग्रहस्त न कवित्वमस्ति मे
राजा तस्मै महिषीश्चतं ददौ अन्यदा राजा कौतुकाकु
लस्सीतां प्राह देवि सुरतं पठेति सीता प्राह श्लोकः
सुरताय नमस्तस्मै जगदानंदहेतवे आनुषंगिकलं
यस्य भोजराजभवादृशाः ततस्तुष्टो राजा तस्यै हारं द
दौ ततो राजा चामरग्राहिणीं वेश्यामवलोक्य कालि
दासं प्राह सुकवे वेश्यामेनां वर्णयेति तामवलोक्य
कालिदासः प्राह श्लोकः कचभारात्कुचभारः कुच
भाराद्भीतिमेति कचभारः कचकुचभाराज्जघनं को
यं चंद्रानने चमत्कारः भोजस्तुष्टस्सन् स्वयमपि प
ठति वदनात्पदयुगलीयं वचनादधरश्च दंतपंक्ति
श्च कचतः कुचयुगलीयं लोचनयुगलं च मध्यत
स्त्वसति अन्यदा भोजो राजा धारानगरे एकाकी विच
रन्कस्यचिद्विप्रवरस्य गृहं गत्वा तत्र कांचन पति
व्रतां स्वांके शयानं भर्तारमुद्वहंतीं पश्यन् ततः त
स्याः शिशुस्सुप्तोत्थितः ज्वालायास्समीपमगच्छत्
इयं च पतिधर्मपरायणा स्वपतिं नोत्थयामास त
तः शिशुं च वन्हौ पतंतं नागृह्णात् राजा चाश्चर्यमा

लोक्यातिष्ठत् ततस्सा पतिधर्मपरायणा वैश्वानरम भ्यर्थयत् यज्ञेश्वरत्वं सर्वकर्मसाक्षी सर्वधर्मान् जानासि मां पतिधर्मपराधीनां शिशुमगृण्हतीं च जानासि ततो मदीयशिशुमनुगृह्य त्वं रक्षः त्वं मा दहेति तनः शिशुः यज्ञेश्वरं प्रविश्य तेच हस्तेन गृहीत्वा धर्मघटिकापर्यंतं तत्रैवातिष्ठत् ततो वारोदीत् प्रसन्नमुखश्च शिशुः साच ध्यानारूढातिष्ठत् ततः यदृच्छया समुत्थिते भर्तरि सा झटिति शिशुं जग्राह तं च परमधर्ममालोक्य विस्मयाविष्टो नृपतिराह अहो मम भाग्यं कस्यास्ति यदीदृश्यः पुण्यस्त्रियोपि मन्नगरे वसंतीति ततः प्रातः सभायामागत्य सिंहासने उपविष्टः राजा कालिदासं प्राह सुकवे महदाश्चर्यं मया पूर्वेद्युरात्रौ दृष्टमस्ती त्युक्त्वा राजा पठति श्लोकः हुताशनश्चंदनपंकशीतलः इति कालिदासस्तत्श्रवणमयं झटिति पठति श्लोकः सुतं पतंतं प्रसमीक्ष्य पावके न बोधयामास पतिं पतिव्रता तदाभवत्तत्पतिभक्तिगौरवात् हुताशनश्चंदनपंकशीतलः राजाच स्वाभिप्रायमालोक्य विस्मितः तमालिंग्य पादयोः पतति स्म एकदा ग्रीष्मकाले राजा अंतःपुरे विचरन् घर्मतापतप्तः आलिंगनादिकमकुर्वन् ताभिः सह सरससल्लापाद्युपचारमनुभूय तत्रैव सुप्तः ततः प्रातरुत्थाय राजा सभां प्रविष्टः कुतूहलात् पठति श्लोकः मरुदागमवार्तयापि शून्ये समये जायति संप्रवृद्ध एव भवभूतिराह श्लोकः उरगी शिशवे बु

भुक्षवेस्वामदिशत्सूत्कृतिमानननानिलेन राजाप्राह भव भूतेलोकोक्तिस्समथरगुतोति ततोपांगेनराजाकालिदासंपश्यति ततस्सआह श्लोकः अबलासुविलासिनोन्वभूवन्नयनैरेवनवोपगूहनानि तदाराजास्वाभिप्रायंज्ञात्वातुष्टः कालिदासंविशेषेणसम्मानितवान् अन्यदामृगयापरवशोराजा अत्यंतमार्तःकस्यचित्सरोवरस्यतीरेस्निग्धच्छायस्यजंबूवृक्षस्यमूलमुपाविशत् तत्रशयानेराज्ञिजंबोरुपरिबहुभिःकपिभिः जंबूफलानिसर्वाण्यपिचालितानि तानिसशब्दंपतितानिपश्यन् घटिकामात्रंस्थित्वाश्रमंपरिहृतःउत्थायतुरंगमवरमारुह्यगतः ततस्सभायांराजापूर्वानुभूतकपिचलितफलपतनरवमनुकुर्वन्समस्यामाह श्लोकः गुलुग्गुग्गुलुगुग्गुलु ततआहकालिदासः श्लोकः जंबूफलानिपक्वानिपतंतिविमलेजले कपिकंपितशाखाभ्यो गुलुग्गुग्गुलुगुग्गुलु राजातुष्टआह सुकवेअहष्टमपिपरहृदयंकथंजानासि साक्षाच्छारदासीतिमुहुर्मुहुःपादयोःपततिस्म एकदाधारानगरेप्रच्छन्नवेषविचरन्कस्यचिद्दरिद्रब्राह्मणस्यगृहेराजामध्यान्हसमयेगच्छन् तत्रातिष्ठतिस्म तत्रावृद्धविप्रोवैश्वदेवंकृत्वाकाकबलिंगृण्हन्गृहाग्निगेस्सभूमौजलस्यच्छायांनिक्षिप्यकाकमाह्वयतिस्म तत्रहस्तविस्फालनेनहाहेतिशब्देनचकाकास्समायाताः तत्रकश्चित्काकस्तारंरारटीतिस्म तच्छ्रुत्वात

त्वत्ती तरुणी भीतेव हं निजोरसि निधाय अये मात इति चक्रंद ततो ब्राह्मणः प्राह प्रिये साधुशीले किमर्थं बिभेषीति साप्राह नाथ मादृशीनां पतिव्रतास्त्रीणां क्रूरध्वनिश्रवणं सह्यं वा साधुशीले तथा भवेदेवेति विप्र आह ततो राजा तच्चरितं सर्वं दृष्ट्वा व्यचिंतयत् अहो इयं तरुणी दुश्शीला नूनं यतो निर्व्याजं बिभेति स्वपातिव्रत्यं स्वयमेव कीर्तयति च नूनमियं निर्भीता सती अत्यंतं दारुणं कर्म रात्रौ करोत्येव एवं निश्चित्य राजा तत्रैव रात्रावंतर्हित एवातिष्ठत् अथ निशीथे भर्तरि सुप्ते सा मांसपेटिकां वेश्याकरेण वाहयित्वा नर्मदातीरमगच्छत् राजाप्यात्मानं गोपयित्वानुगच्छतिस्म ततस्सा नर्मदां प्राप्य तत्र समागतानां ग्राहाणां मांसं दत्वा नदीं तीर्त्वा अपरतीरस्थेन शूलायारोपितेन स्वमनोरमेण सह रमतेस्म तच्चरित्रं दृष्ट्वा राजा गृहं समागत्य प्रातस्सभायां कालिदासमालोक्य प्राह सुकवे शृणु श्लोकः दिवाकाकरुताद्भीता ततः कालिदास आह श्लोकः रात्रौ तरति नर्मदां ततः तुष्टो राजा पुनः प्राह श्लोकः तत्र संति जले ग्राहाः ततः कविराह मर्मज्ञा सैव सुंदरी ततो राजा कालिदासस्य पादयोः पतति एकदा धारानगरे विचरन् वेश्यावीथ्यां राजा कंदुकलीलातत्परां तद्भ्रमणवेगेन पादयोः पतितां तासावत्सा कांचन सुंदरीं दृष्ट्वा सभायामाह कंदुकं वर्णयंतु कवय इति तदा भवभूतिराह श्लोकः विदितं ननु कंदुक ते हृदयं प्रम

दाधरसंगमलुब्धइव वनिताकरतामरसाभिहतः पतितःपतिग्रहस्तनसि ततोवररुचिःप्राह श्लोकः ए कोपित्र्यइवभातिकंदुकोयंकांतायाःकरतलरागरक्तरक्तः भूमौतच्चरणनखांशुगौरगौरःस्वस्थस्सनयनमरीचिनीलनीलः ततःकालिदासआह श्लोकः पयोधराकारधरोहिकंदुकःकरेणरोषादभिहन्यतेमुहुः इतीवनेत्राकृतिभीतिमुत्पलंस्त्रियःप्रसादायपपातपादयोः तदाराजातुष्टःत्रयाणामक्षरलक्षंददौ विशेषेणचकालिदासमहृष्टावतंसकुसुमपतनबोद्धारंसंमानितवान् ततःकदाचिच्चित्रकर्मावलोकनतत्परः राजाचित्रलिखितं महाशेषंदृष्ट्वासम्यग्लिखितमित्यवदत् तदाकश्चिच्छिवशर्मानामकविःशेषमि षेणराजानंस्तौति श्लोकः अनेकफणिनस्संति भेकभक्षणतत्पराः एकएवहिशेषोयंधरणीधरणक्षमः तदानीं राजातदभिप्रायंज्ञात्वातस्मैलक्षंददौ कदाचिद्वसंतकालेसमागतेज्वलंतींहसंतींसंसेवयन् राजाकालिदासंप्राह सुकवेहसंतींवर्णयेति ततःसुकविराह कविमतिरिवबहुलोहासुघटितचक्राप्रभातवेलेवहरमूर्तिरिवहसंतीभातिविधूमानलोपेता राजाअक्षरलक्षंददौ एकदाभोजराजोतगृहेभोगार्हीस्तुल्यगुणाश्चतस्रो निजांगनाअपश्यत् तासुच कुंतलेश्वरपुत्र्यांपद्मावत्यां ऋतुस्नानेअंगराजस्यपुत्र्यांचंद्रमुख्यांक्रमप्राप्तिकमलनाम्न्यांचद्यूतप

णजयलब्धप्राप्तिभयग्रमहिष्यां चलीलादेव्योर्दूतीप्रे
षणमुखेनाह्वानं च एवं च तुरागुणान्दृष्ट्वा तेषु गुणेषु
न्यूनाधिकभावं राजाप्यचिंतयत् तत्र सर्वत्र दाक्षि
ण्यनिधिः राजराजः श्रीभोजः तुल्यभावेन द्विचिघटि
काप र्यंतं विचिंत्य विशेषानवधारणेन निद्रां गतः
प्रातश्चोत्थाय कृताह्निकं सभामगात् तत्र च सिं
हासनमलंकुर्वाणः श्रीभोजः सकलविद्वत्कविमं
डलमंडनकालिदासमालोक्य सुकवे इमां अक्षरा
नतुरीयचरणां समस्यां शृणु इत्युक्त्वा पठति श्लो
कः अप्रतिपत्तिमूढमनसा द्वित्राः स्थिता नाडिकाः
इति पठित्वा राजा कालिदासमाह सुकवे एतत्सम
स्यापूरणं कुर्विति ततः कालिदासः तस्य हृदयं कर
तलामलकवत् प्रपश्यन् अक्षराधिकचरणत्रयवि
शिष्टां तां समस्यां पठति देव स्नातातिष्ठति कुंतले
श्वरसुता वारोंगराजः स्वसुः द्यूते रात्रिरियं कृता क
मलया देवी प्रसाद्याधुना इत्यंतःपुरसुंदरीजनगुणे
न्याय्याधिकं ध्यायता देवेनाप्रतिपत्तिमूढमनसा द्वि
त्राः स्थिता नाडिकाः तदा राजा स्वहृदयमेव ज्ञा त
वतः कालिदासस्य पादयोः पतति स्म कविमंडलं च
चमत्कृतमजायत एकदा राजा धारानगरे विच
रन् क्वचित् पूर्णकुंभं धृत्वा समायांती पूर्णचंद्रान
नां कांचिद् दृष्ट्वा तत्कुंभजले शब्दं च कंचन श्रुत्वा नून
मेव तस्याः कंठग्रहं यं घटः रतिकूजितमिव कूज
तीति मन्यमानः सभायां कालिदासं प्राह श्लोकः

कूजितं रतिकूजितमिति कविराह श्लोकः विदग्धेषु सुखेरक्तैनितंबोपरिसंस्थिते कामिन्याश्लिष्टसुगले कूजितं रतिकूजितं तदा तुष्टो राजा प्रत्यक्षरलक्षं ददौ ननाम च एकदा नर्मदायां महाह्रदे जालकैरेकः शिलाखंडं ईषद्दग्धिताक्षरः कश्चिद्दृष्टः तैश्च परिचिंतितं इदमत्र लिखितमिव किंचिज्ज्ञातिनूनमिदं राजनिकटं नेयमिति बुध्या भोजसदसि समानीतं तदाकर्ण्य भोजः प्राह पूर्वं भगवता हनुमता श्रीमद्रामायणं कृतं तदत्र ह्रदे नूतनैः प्रक्षेपितमिति श्रुतमस्ति ततः किमिदं लिखितमित्यवश्यं विचार्यमिति लिपिज्ञानं कार्यं जतुपरीक्षयाक्षराणि परिज्ञाय पठति तत्र चरणद्वयमानुपूर्व्या लब्धं श्लोकः अयि खलु विषमः पुराकृतानां भवति हि जंतुषु कर्मणां विपाकः ततो भोजः प्राह एतस्य पूर्वार्धं कथ्यतामिति तदा भवभूतिराह श्लोकः कृतुकुलमकलंकमायतास्याः कृनुरजे नीचरसंगमापवादः ततो भोजस्तत्र ध्वनिदोषं मत्वा नस्त देव पूर्वार्धमन्यथा पठति स्म श्लोकः क्व जनकतनया क्व रामजाया क्व च दशकंधरमंदिरे निवासः अयि खलु विपाकः ततः भोजः कालिदासं प्राह सुकवे त्वमपि कवित्वदर्थं पठेति स आह शिवशिरसि शिरांसि यानि रेजुः शिव शिव तानि लुठंति गृध्रपादैः अयि खलु विपाकः ततस्तस्य शिलाखंडस्य पूर्वपुटे जतुशोधनेन कालिदासपठ

तितमेवरदृष्ट्वाराजाभृशंतुतोष कदाचिद्भोजेनविला
सार्थंनूतनगृहांतरंनिर्मितं तत्रगृहांतरे गृहप्रवेशात्पू
र्वमेकःब्रह्मराक्षसःप्रविष्टः सचरात्रौ तत्रये
वसंतितान् भक्षयति ततो मांत्रिकान्समाहूय तद्दु
श्चाटनायराजायततेस्म सच आगच्छन्नेव मांत्रिका
न्भक्षयति किंचस्वयंकवित्वादिकं पूर्वाभ्यस्तमे
वपठन्तिष्ठति एवंस्थिते तत्रैवरक्षसिराजाकथ
मस्यनिवृत्तिरिति व्यचिंतयत् तदाकालिदासः
प्राह देवनूनमयंराक्षसः सकलशास्त्रप्रवीणस्सुक
विश्चभाति अतस्तमेव तोषयित्वाकार्यंसाधयामि
मांत्रिकास्तिष्ठंतु ममग्रंथंपश्येत्युक्त्वा स्वयंतत्रग
त्वागवाक्षेतेस्म ततः प्रथमयामेब्रह्मराक्षसःसमा
गतः सच पूर्वपुरुषंदृष्ट्वाप्रतियाममेकैकांसमस्यां
पाणिनिसूत्रमेवपठति येनोत्तरंतद्दृदयंगतंनोक्तम
यंनब्राह्मणोतोहंतव्यइति निश्चित्यहंति तदानी
मपिपूर्ववदयमपूर्वःपुरुषः अतःमयासमस्यापठ
नीयानचेदुक्तिसदृशमुत्तरंतस्याः तदाहंतव्यइतिबु
द्ध्वापठति सर्वस्यद्वेइति तदाकालिदासःप्राह सुम
तिकुमतीसंपदापत्तिहेतू इतितस्सगतः पुनरपि
द्वितीयामेसमागत्यपठति वृद्धोयूना इतितदाक
विराह सहपरिचयात्त्यज्यतेकामिनीभिः इतितृ
तीययामेसराक्षसःपुनस्समागत्यपठति एको
गोत्रेइति ततःकविराह प्रभवतिपुमान्यःकुटुं
बंबिभर्ति ततश्चतुर्थयामे आगत्यसराक्षसःपठ

ति स्त्रीपुंवच्चइति ततःकविराह प्रभवतियदातद्धिगे हं विनष्टं इति ततस्सराक्षसोयामचतुष्टयेपिस्वाभि प्रायसेवज्ञात्वातुष्टः प्रभातसमयेसमागत्यतमाश्लि ष्यप्राह सुमतेतुष्टोस्मि किंतवाभीष्टमिति कालिदासः प्राह भगवन्नेतद्गृहं विहायान्यत्रगंतव्यमिति सोपि तथेतिगतः अनंतरंतुष्टोभोजःकविंबहुमानितवान् एकदासिंहासनमलंकुर्वाणेश्रीभोजेसकलभूपालशि रोमणौद्वारपालआगत्यप्राह देवदक्षिणदेशात्कोपि मल्लिनाथनामाकविः कौपीनावशेषोद्वारिवर्तते रा जाप्रवेशयेत्याह ततःकविरागत्यस्वस्तीत्युक्त्वातदा ज्ञयाचोपविष्टः पठति श्लोकः नागोभातिमदेनखं जलधरैःपूर्णेंदुनाशर्वरी शीलेनप्रमदाजवेनतुरगो नित्योत्सवैर्मंदिरं वाणीव्याकरणेनहंसमिथुनैर्नद्यः स्सभापंडितैः सत्पुत्रेणकुलंत्वयावसुमतीलोकत्र यंभानुना ततोराजाप्राह विद्वन्तवोद्देश्यंकिमिति ततःकविराह श्लोकः अंबाकुप्यतिनमयानसुष यासापिनांबयानमया अहमपिनतयावद्राजन्क स्यदोषोयं इतिराजाचदारिद्र्यदोषंज्ञात्वाकविंपूर्ण मनोरथंचक्रे एकदाद्वारपालआगत्यराजानंप्राह देवकविशेखरोनाम महाकविर्द्वारिवर्तते राजाप्रवे शयेत्याह ततःकविरागत्यस्वस्तीत्युक्त्वापठति श्लो कः राजन्दौवारिकादेवप्राप्तवानस्मिवारणं मद वारणमिच्छामित्वत्तोहंजगतीपते तदाभाद्रुष्टःति ष्टन्राजातिसंतुष्टः तंप्रागदेशंसर्वेकवयेदत्तमेलादि

क्षिणाभिमुखोभूत् ततःकविश्चिंतयतिकिमिदंरा
जामुखंपरावृत्यमांनपश्यतीति ततोदक्षिणदेशंसमा
गत्याभिमुखःकविःपठति श्लोकः अपूर्वेयंधनुर्वि
द्याभवताशिक्षिताकथं मार्गणौघस्समायातिगुणो
यातिदिगंतरं ततोराजादक्षिणदेशमपिमनसाक
वयेदत्वास्वयंप्रत्यङ्मुखोभूत् कविस्तत्रागत्यप्राह
श्लोकः सर्वज्ञइतिलोकोयंभवंतंभाषतेमृषा पद
मेकन्नजानीषेवक्तुंनास्तीतियाचके ततोराजातम
पिदेशंकवेर्दत्वामत्वाउदङ्मुखोभूत् कविस्तत्रापिआ
गत्यप्राह श्लोकः सर्वदासर्वदोसीतिमिथ्यात्वंकथ्य
तेबुधैः नारयोलेभिरेपृष्ठंनवक्षःपरयोषितः ततो
राजात्वांभूमिंकवेर्दत्वामत्वाउत्तिष्ठतिस्म कविश्चतद
भिप्रायमज्ञात्वापुनराह श्लोकः राजन्कनकधारा
भिःत्वयिसर्वत्रवर्षति अभाग्यच्छत्रसंछन्नेमयिन
यांतिबिंदवः तदाराजाचांतःपुरंगत्वालीलादेवींप्राह
देविसर्वराज्यंकवयेदत्तंततस्तपोवनंमयासहाग
च्छेति अस्मिन्नवसरेविद्वान्द्वारिनिर्गतः बुद्धिसाग
रेणबुध्यामात्येनपृष्टः विद्वन्राज्ञाकिंदत्तमितिसआ
ह नकिमपीति तदाअमात्यःप्राह तत्रोक्तंश्लोकंप
ठ ततःकविश्लोकचतुष्टयंपठति अमात्यस्ततः
प्राह सुकवेतवकोटिद्रव्यंदीयते परंराज्ञायद्दत्तंत
दत्तंभवति तत्पुनर्विक्रियतामिति कविस्तथाकरो
ति ततःकोटिद्रव्यंदत्वाकविंप्रेषयित्वा अमात्योरा
जनिकटमागत्यतिष्ठतिस्म तदाराजाचतमाह बु

द्धिसागरराज्यमिदंसर्वंदत्तंकथयेपत्नीभिःसहतपो
वनंगच्छामि तत्रतपोवनेतवापेक्षायदिमयासहाग
च्छेतितितोऽमात्यःप्राह देवतेनकविनाकोटिद्रव्य
मूल्येनराज्यमिदंविक्रीतं कोटिद्रव्यंचविदुषेदत्तं
अतोराज्यंभवदीयमेवभुंक्ष्वेति तदाराजावेबुद्धि
सागरंचविशेषेणसम्मानितवान् अन्यदाराजामृ
गयारसेनाटवीमटनूललाटतपेतपनेघूनदेहःपि
पासापर्याकुलस्तुरगमारुह्यउदकार्थइनिकटतट
भुवपुटन् तदलब्ध्वापरिश्रांतःकस्यचिन्महातरोः
अधस्तादुपविष्टःतत्रकाचिद्गोपकन्यासुकुमारम
नोज्ञसर्वांगाम्रच्छयाधारानगरंप्रतितक्रंविक्रीतु
कामातक्रभांडंचोद्वहंतीसमागच्छतिनामागच्छती
दृष्ट्वाराजापिपासावशादेतद्भांडस्थंपेयंचेत्पिवा
मीतिबुध्यापृच्छत् तरुणिकिमावहसीति साचत
न्मुखश्रियाभोजंमत्वातत्पिपासांचज्ञात्वातन्मु
खावलोकनवशाच्छंदोरूपेणाह श्लोकः हिमकुंद
शशिप्रभशंख निभंपरिपक्वकपित्थसुगंधरस युव
तीकरनिर्मथितंपिबहेनृपस्वरुजापहरं इतिरा
जातत्रतक्रंतुष्टःपीत्वातांप्राह सुभ्रुकिंतवाभीष्ट
मिति साचकिंचिदाविष्कृतयौवनामदपरवशामो
हाकुलनयनाप्राह देवमांकन्यामेवावेहि सापुन
राह इंदुंकैरविणीवकोकपटलीवांभोजनीवल्लभं
मेघंचातकमंडलीवमधुपश्रेणीवपुष्पव्रजं माकं
दंपिकसुंदरीवरमणीवात्मेश्वरंप्रोषितं चेतोवृत्तिरि

यंस दा नृपवर त्वांद्रष्टुमुत्कंठते राजा च मत्कृत: प्राह सुकुमारि त्वां लीलादेव्या अनुमत्या स्वीकुर्म: इति धारा नगरं नीत्वा तां तथैव स्वीकृतवान् कदाचिद्राजाभिषेके मदनशरपीडिताया: मदिराक्ष्या: करतलगलितो हेमकलशस्सोपानपंक्तिषु रटन्नेवपपात ततो राजा सभायामागत्य कालिदासं प्राह सुकवे एनां समस्यां पूरय टंटंटटंटंटटंटंटंटं तदा कालिदास: प्राह राजाभिषेके मदविह्वलाया हस्ताच्च्युतो हेमघटो युवत्या: सोपानमार्गेषु करोति शब्दं टंटंटंटंटंटटंटं टंटंटं तदा राजा स्वाभिप्रायं ज्ञात्वाक्षरलक्षं ददौ अन्यदा सिंहासनमलंकुर्वाणे श्रीभोजे कश्चिच्चोर: आरक्षकै राजनिकटं नीत: राजा तं दृष्ट्वा कोयमित्यपृच्छत् तदा आरक्षका: प्राहु: देव अनेन कुभिल्लकेन कस्मिंश्चिद्वेश्या गृहे घातपातमार्गेण द्रव्याणि अपहृतानीति तदा राजा प्राह अयं दंडनीय इति तत: मुकुंडो नाम चोर: प्राह श्लोक: भट्टिर्नष्टो भारवीयोपि नष्टो भिक्षुर्नष्टो भीमसेनोपि नष्ट: मुकुंडोहं भूपतिस्त्वं हि राजन् भभापंक्तावंतक: सन्निविष्ट: तदा राजा प्राह भो मुकुंड गच्छ गच्छ यथेच्छं विहर कदाचिद्राजो मृगयापर्याकुल: वने विचरन् विश्रमाविष्टहृदय: कंचित्तटाकमासाद्य स्थितवान् श्रमात्प्रसुप्त: ततोपरपयोनिधिकुहरं गते भास्करे श्लोक: तत्रैवारोचत निशा तस्य राज्ञ: सुखप्रदा चंचच्चंद्रकरानंदसंदोहपरिकंदला तत: प्रत्यूषसमये नगरीम

तिप्रस्थितोराजाचरमगिरिनितंबलंबमानशशांकबिंबमवलोक्यसकुतूहलस्सभामागम्य तदासमीपस्थान् कवींद्रान्निरीक्ष्य समस्यामेकामवदत् श्लोकः चरमगिरिनितंबे चंद्रबिंबं ललंबे तदामाह भवभूतिः श्लो० अरुणकिरणजालैरंतरिक्षे गतर्क्षे ततोदंडी प्राह श्लोकः चलतिशिशिरवाते मंदमंदं प्रभाते ततःकालिदासःप्राह श्लोकः युवतिजनकदंबे नाथमुक्तोष्ठबिंबे चरमगिरिनितंबे चंद्रबिंबं ललंबे ततोराजा सर्वानपिसम्मानितवान् तत्रकालिदासं विशेषतः पूजितवान् अथकदाचिद्भोजः नगराद्बहिर्निर्गतः नूतनेनतटाकांभसाबाल्यसाधितकपालशोधनादि चकार तन्मूलेनकश्चनशफरशावः कपालंप्रविष्टो विरूढकरोटिकानिकटघटितो विनिर्गतः ततःराजा स्वपुरीमवाप तदारभ्यराज्ञःकपाले वेदनाजाता ततस्तत्र स्थैर्भिषग्वरैः सम्यक्चिकित्सितापिनशांता एवमहर्निशंनितरामस्वस्थोराजाभ्मानुषविदितेन महारोगेण श्लोकः क्षामक्षाममभूदसुर्गतसुखंहेमंतकालेऽब्जवद्दूरं निर्गतकांतिराहुवदनाक्रांताब्जबिंबोपमं चेतःकार्यपदेषु तस्यविमुखं क्लीबस्यनारीष्विव व्याधिःपूर्णतरो बभूवविपिनेशुष्केशिखावानिव एवमतीतेसंवत्सरेऽपिकाले नकेनापिनिवारितःरुजः ततःश्रीभोजोनानाविधसमानौषधप्रसन्न रोगदुःखितमनास्स्वसमीपस्थंशोकसागरनिमग्नं बुद्धिसागरं कथमपिसंयताक्षरामुवाचवाचं बुद्धि

सागरइतःपरमस्मद्विषयेनकोपिभिषग्वरोवसति मातनोतुवाहटादिभेषजकोशान्निखिलान्स्रोत सिनिरस्यागच्छममदेवसमागमसमयःसमागतइ तितच्छ्रुत्वासर्वेपिपौरजनाःकवयश्चअवरोधसमा जाश्चविगलद्स्रसारनयनाबभूवुः ततःकदाचि देवसभायांपुरंदरःसकलमुनिवृंदमध्यस्थंवीणा मुनिमाह मुनेइदानींभूलोकेकानामवार्तेति ततः नारदःप्राह सुरनाथकिमप्याश्चर्यंकिंतुधारानगरवा सीश्रीभोजभूपालःरोगपीडितोनितरामस्वस्थःव र्ततेसतस्यरोगःकेनापिननिवारितः तदवेनभोजनृ पालेनभिषग्वराअपिस्वदेशान्निष्कासिताः वै द्यशास्त्रमपिअनृतमितिनिरस्तमिति एतदाक र्ण्यपुरुहूतस्समीपस्थौनासत्याविदमाह भोस्वर्वै द्यौकथमनृतंधन्वंतरीयंशास्त्रंतदातावाहतुरमरे श देवनव्यलीकमिदंशास्त्रंकिंत्वमरविदितेनरोगे णबाध्यतेसौभोज इतीद्रः कोसाववार्यरोगः किं भवतोर्विदितःततस्तावूचतुः देवकापालशोधने कृतेभोजेनतदामविष्टःपाठीनः तन्मूलोयंरोगइ तितदाईद्रःस्मयमानमुखःप्राह तदिदानीमेवयुवा भ्यांगंतव्यंनचेदितःपरंभूलोकेभिषक्छास्त्रस्या सिद्धिर्भवेत् नखलुसरस्वतीविलासस्यनिकेतनं शास्त्राणामुद्धर्ताचेतिततःसुरेंद्रादेशेनतावुभाव पिधृतद्विजन्मवेषौधारानगरंप्राप्य द्वारस्थंप्राहतुः द्वारस्थआवांभिषजौकाशीदेशादागतौश्रीभोजाय

विज्ञापयते नानृतमित्यंगीकृतं वैद्यशास्त्रमिति श्रु
त्वा तत्प्रतिष्ठापनाय तद्रोगनिवारणाय चेति ततो
द्वारस्थः प्राह भो विप्रौ न कोपि भिषक्प्रवरः प्रवेष्ट
व्य इति राज्ञोक्तं राजा तु केवलमस्वस्थः नायमव
सरो विज्ञापनस्येति तस्मिन्क्षणे कार्यवशाद्बुद्धि
र्निर्गतो बुद्धिसागरस्तौ दृष्ट्वा कौ भवंतावित्यपृच्छ
त् ततस्तौ यथागतमूचतुः ततो बुद्धिसागरेण तौ
राज्ञः समीपं नीतौ ततो राजा ताववलोक्य मुखश्रि
श्रिया अमानुषाविति बुध्वा आभ्यां शक्यते मद्रो
गो निवारितुमिति निश्चित्य तौ बहुमानितवान्
ततस्तावूचतुः राजन्नभेषजव्यं रोगो निर्गतः किंतु
कुत्रचिदेकांते त्वया भवितव्यमिति ततः राज्ञा
पि तथा कृतं ततस्तावपि राजानं मोहचूर्णेन मोह
यित्वा शिरः कपालमादाय तत्करोटिकापुटे स्थि
तं शफरकुलं गृहीत्वा कस्मिन्भिन्न भाजने निक्षिप्य
संधानकरण्या कपालं यथावदारचय्य संजीवि
न्या च तं जीवयित्वा तस्मै तद्दर्शयतां तदा तद्दृष्ट्वा
राजा विस्मितः किमेतदिति तौ पृष्टवान् तदा तावू
चतुः राजन् त्वया बाल्यादारभ्य परिचितकपाल
शोधनत्वस्य प्राप्तमिदमिति ततो राजा तावश्वि
नौ मत्वा तत्क्षोभनार्थं मपृच्छत् किमस्माकं प
थ्यमिति ततः तावूचतुः श्लो० अशीतेनांभसा स्नानं
पयःपानं वयः स्त्रियः एतद्वो मानुषाः पथ्यमिति
तदंतरे राजा मध्ये मानुषा इति संबोधनं श्रुत्वा

वयं चेन्मानुषाः कौ युवामिति तयोः हस्तौ स्पृष्टिति स्वहस्ताभ्यां अग्रहीत् ततस्तत्क्षण एव तावंतरधत्तां अवुवं तावेव कालिदासेन पूरणीयं तुरीयचरणमिति ततो राजा विस्मितः सर्वानाहूय तद्वृत्तमब्रवीत् तच्छ्रुत्वा सर्वे चित्चमत्कृताः विस्मिताश्च बभूवुः तत्कालिदासेन तुरीयचरणं पूरितं स्निग्धमुष्णं च भोजनं इति ततो भोजोपि कालिदासं लीलामानुषं मत्वा परं सम्मानितवान् अथ भोजनृपालः प्रतिदिनं संजातकल्लत्कांतिर्विबुधे धाराधीशः कृष्णेतरपक्षे चंद्र इव ततः कदाचित् सिंहासनमलंकुर्वाणे श्रीभोजे कालिदासभवभूतिदंडिबाणमयूरवररुचिप्रभृतिकवितिलककुलालंकृतायां सभायां द्वारपाल एत्याह देव कश्चित्कविः द्वारि तिष्ठति तेनेयं पत्रिका गाथासनाथा चीरिका देव सभायां निक्षिप्यतामिति तां दर्शयति राजा गृहीत्वा तां वाचयति श्लोकः कांचिद्धारमणं वसंति शेषयंती करंडं दासीहस्तात्सभय मसिवल्ल्यालमत्स्योपरिस्ते गौरीकांतं पवनतनयं चंपकं चात्र भावं पृच्छत्यार्यो निपुणतिलको मल्लिनाथः कवींद्रः तच्छ्रुत्वा सर्वोपि विद्वत्परिषच्चमत्कृता ततः कालिदासः प्राह राजन् मल्लिनाथः शीघ्रमाकारयितव्य इति ततो राजादेशाद्वारपालेन सम्प्रवेशितः कविः राजानं स्वस्तीत्युक्त्वा तदाज्ञयोपविष्टः ततो राजा माह तं कवींद्रं विद्वन्मल्लिनाथ कवे साधु रचिता गाथा तदा कालिदासः प्राह किमुच्यते साध्विति देशांतरगतकां

तायाश्चारित्र्यवर्णनेनश्लाघनीयोसिविशिष्यतत्तद्ग
वृत्तिभटवर्णनेन तदाभवभूतिःप्राह विशिष्यतेइ
यंगाथापंक्तिःकंठोद्यानवैरिणादानात्म जस्यवर्णना
दिति ततःप्रीतेनराज्ञातस्मैदत्तंसुवर्णानांलक्षंपंच
गजाश्चदशतुरगाश्च दत्ताः ततःप्रीतोविद्वान्स्तौ
तिराजानं श्लोकः देवभोजतवदानजलौघैःसोप्यम
ज्जनोऽतिविशंकेअन्यथातदुदितेषुशिलागोभूरुहे
षुकथमीदृशाहानं ततोलोकोत्तरं श्लोकंश्रुत्वारा
जापुनरपितस्मैलक्षत्रयंददौ ततोलिखतिस्मभां
डा रिकोधर्मपत्रे श्लोकः प्रीतःश्रीभोजभूपस्स
दसिविरहिणीगूढनर्मोक्तिपद्यंश्रुत्वाहेम्नांचलक्षंद
शसचतुरगान्पंचनागानयच्छत् पश्चात्तत्रैवसोयं
वितरणगुणसद्वर्णनात्प्रीतचेता लक्षंलक्षंचल
क्षंपुनरपिचददौ मल्लिनाथायतस्मै ततःकदाचि
द्भोजराजःकालिदासंप्रतिप्राह सुकवेत्वमस्माकं
चरमग्रंथंपठ ततःक्रुद्धोराजानंविनिंद्यकालिदा
सःक्षणेनतंदेशंत्यक्त्वाविलासवत्यासह एकशिला
नगरंप्राप ततःकालिदासवियोगेनशोकाकुलस्तं
कालिदासंमृगयितुंराजाकापालिकवेषंधृत्वा क्रमे
णएकशिलानगरंप्राप ततःकालिदासोयोगिनंदृ
ष्ट्वातंसादरपूर्वंपप्रच्छ योगिन्कुत्रतेस्थितिरिति यो
गीवदति सुकवेअस्माकंधारानगरेवसतिरिति
ततःकविराह तत्रभोजःकुशलीकिं ततोयोगीप्रा
ह किंमयाप्यवक्तव्यमिति ततःकविराह तत्रा

तिशयवार्तास्ति चेत्सत्यं कथयेति तदा योगी प्राह भो
जो दिवंगत इति ततः कविर्भूमौ निपत्य प्रलपति देव
त्वां विनास्माकं क्षणमपि भूमौ न स्थितिः अतस्त्वत्स
मीपमहमागच्छामि इति कालिदासः बहुशो विलप्य
चरमश्लोकं कृतवान् श्लोकः अद्य धारा निराधारा
निरालंबा सरस्वती ति पंडिताः खंडिताः सर्वे भोज
राजे दिवंगते एवं यदा कविना चरमश्लोक उक्तस्त
दैव स योगी भूतले विसंज्ञः पपात ततः कालिदास
स्तथाविधं तमवलोक्य अयं भोज एवेति निश्चित्य अ
हह महाराज तत्र भवताहं वंचितोस्मीत्यभिधाय
झटिति तं श्लोकं प्रकारांतरेण पपाठ ॥ ॥श्लोकः
अद्य धारा सदाधारा सदालंबा सरस्वती पंडिता मंडि
ताः सर्वे भोजराजे भुवं गते ततो भोजस्तमालिंग्य प्र
णम्य धारानगरं प्रतिययौ शैले शैल विनिश्चलं च ह
दयं मुंजस्य तस्मिन्क्षणे भोजे जीवति हर्षसंचयसु
धाधाराम्बुधौ मज्जति स्त्रीभिः शीलवतीभिरेवस
हसा कर्तुं तपस्त्वरे मुंजे मुंचति राज्यभारमभज
त्त्यागे च भोगे नृपः ॥ ॥इति श्रीमन्महाराजाधिराज
स्य धारानगराधीशस्य भोजराजस्य प्रबंधस्समाप्ति
मफाणीत् ॥ छ ॥ ॥ छ॥ वाराणसी प्रसादस्य
नियोगेन तु यत्नतः काशीसंस्कृतमुद्रायामङ्कितोयं शि
लाक्षरैः १ काश्यां त्रिपुरभैरवीसन्निधौ श्रीयुतबा
बू फतहनारायणसिंहजीत्यभिधायुजो निकेतने मु
द्रितोयम् वैशाखकृष्ण १० भृगुवासरे सम्वत् १९--